कविकुलगुरू कालिदास संस्कृत विश्वविद्यालय, रामटेक

हस्तलिखित संग्रह

दाखल क्र. M2389 विषय पुराण

नाव श्रीगोकर्णपुराणसार

लेखक/लिपीकार ........

पृष्ठ 80 काळ ........ पूर्ण/अपूर्ण

# ॥ श्रीक्षेत्रगोकर्णपुराणम् ॥

गोकर्णक्षेत्रनिलयं द्विभुजं वरदं सताम् ॥ सर्वाभीष्टप्रसिद्ध्यर्थं तं नमामि गजाननम् ॥ १ ॥
कुरूणामन्वये जातो राजा परमधार्मिकः ॥ शौनकाद्यैर्मुनिवरैः कृतसत्प्रश्नसत्कथः ॥ १ ॥ ऋषिभिः सहितश्चापि शतानीको महामतिः ॥ आस्ते कृताभिषेकोऽथ सन्यासाय कृतक्षणः ॥ २ ॥ अथाजगाम धर्मात्मा व्यासशिष्यो महामतिः ॥ तीर्थयात्रां परिचरन्सूतः पौराणिकोऽर्थवित् ॥३॥ उग्रश्रवाः शतानीकं जयाशीर्भिरवर्धयत् ॥ अभिवाद्य मुनीन्सर्वाञ्छौनकादींस्तपोधनान् ॥ ४॥ पप्रच्छ कुशलं सर्वं तपःस्वाध्यायकर्मसु ॥ ततः स राजा धर्मात्मा युधिष्ठिरकुलोद्भवः ॥ ५ ॥ सूतमाह महाप्राज्ञमास्यतामिति सादरम् ॥ आसनं कल्पयामास शौनकस्य तदा नृपः ॥ ६ ॥ अनुज्ञां प्राप्य सूतस्तु मुनीनां भावितात्मनाम् ॥ उपविष्टः सभामध्ये कृतातिथ्यो महामतिः ॥ ७ ॥ विश्रान्तोऽभूच्चिरं तस्यां स भायां सूतनन्दनः ॥ ततोऽब्रवीदिदं वाक्यं शौनकः सूतमादरात् ॥ ८ ॥ शौनक उवाच ॥ कुत आगम्यते विद्वन्निदानीं सूतनन्दन ॥ क्व गतोऽसि भवान्पूर्वं किमुद्दिश्य प्रयोजनम् ॥ ९ ॥ सूत उवाच॥ तीर्थयात्रां गतो ब्रह्मन् त्रिः परीत्य धरामिमाम् ॥ भवन्तं द्रष्टुमायातः शतानीकं च पार्थिवम् ॥ १०

पारिक्षितं च राजर्षिं संन्यासाय कृतक्षणम् ॥ सह स्थित्वा द्विजवरैर्गोकर्णे सुचिरं द्विज ॥ ११ ॥ इहागतोऽस्मि विप्रर्षे किं करोमि प्रशाधि माम् ॥ शौनक उवाच ॥ तीर्थानां दर्शने पुण्यं स्नाने दाने च यत्फलम् ॥१२॥ उपवासे जपे होमे तीर्थे देवार्चने च यत् ॥ तीर्थानामपि चोत्पत्तिं पुण्यं पुण्यफलं तथा ॥ १३ ॥ तत्सर्वं कथयास्माकं परं कौतूहलं हि नः ॥ इत्युक्ते मुनिना तत्र शतानीकोऽपि पार्थिवः ॥१४॥ पप्रच्छेदं सभामध्ये सूतं वै रोमहर्षणिम् ॥ शतानीक उवाच ॥ गोकर्णादागतमिति श्रुतं ते वदतां वर ॥१५॥ कस्मिन्देशे स गोकर्ण तीर्थराजः प्रशस्यते ॥ किमर्थमुषितं तत्र कैर्वा विप्रर्षिभिः सह ॥१६॥ ब्रूह्यशेषेण नः सूत यस्माद्ध्यागतो ह्यसि ॥ सूत उवाच ॥ श्रूयतां कुरुशार्दूल सहैर्भिर्मुनिपुङ्गवैः ॥१७॥ व्यासप्रसादाद्वक्ष्यामि सर्वं प्रत्यक्षदर्शिवत् ॥ पुरा प्रोवाच कैलासे षण्मुखाय महेश्वरः ॥१८॥ गोकर्णक्षेत्रमाहात्म्यं नारदोऽग्निसुताय च ॥ अहं तद्वर्णयिष्यामि श्रृणु राजन्महामते ॥१९॥ सिद्धिक्षेत्राणि त्रीण्याहूरहस्यानि सुरेष्वपि ॥ शालग्रामं पुष्करं च गोकर्णं च नराधिप ॥२०॥ शालग्रामात्पुष्कराच्च गोकर्णं शीघ्रसिद्धिदम् ॥ यद्यदिच्छति गोकर्णे तत्तदाप्नोति निश्चयात् ॥ २१ ॥ एकार्णवे जगत्यस्मिन्सृष्टिकाल उपस्थिते ॥ ब्रह्मा चतुर्मुखः पूर्वं सृष्ट्यर्थं तप आस्थितः ॥२२॥ तदा-

तस्य भ्रुवोर्मध्याद्रुद्रः प्रादुरभूत्प्रभुः ॥ ब्रह्मा प्रोवाच तं दृष्ट्वा सृष्टिं कुरु महामते ॥२३॥ तथेत्युक्त्वा तदा रुद्रो जरामरणवर्जिताः ॥ सत्त्वैकगुणसम्पन्नाः समप्रकृतयः प्रजाः ॥२४॥ स्रक्ष्यामीत्येव निश्चित्य पाताले तपसि स्थितः ॥ एवं तपस्यतस्तस्य व्यतीयाय युगत्रयम् ॥२५॥ ततो विलम्बितं दृष्ट्वा रुद्र-सर्गं प्रजापतिः ॥ तत्र कारणमन्विच्छन्यथापूर्वं ससर्ज ह ॥२६॥ श्रुत्वेदं प्रकृतेर्वाक्यात्तया रुद्रः सहो त्थितः ॥ ददर्श मेदिनीं विष्वगाव्रतां चक्रवत्स्थिताम् ॥२७॥ क्रुद्धः प्रोवाच तां मार्गमुद्गन्तुं मम द-र्शय ॥ भूरुवाच ॥ विश्वात्मन्प्रणतां त्राहि स्त्रीभावादपि विह्वलाम् ॥२८॥ निरागसं भेदयितुं नोचितं ते कृपानिधे ॥ कर्णच्छिद्रेण मे देव ह्रस्वोभूत्वोर्ध्वमुत्पत ॥२९॥ तथेति तां समाश्वास्याङ्गुष्ठमात्रवपुर्धरः ऊर्ध्वमेत्याह गिरिशो भद्रे! मत्सङ्गमात्त्वयि ॥ भविता तनयश्चण्डवीर्योऽङ्गारकनामकः ॥३०॥ गो शब्देनाख्यायसे त्वं कर्णस्थानमिदं ह्यतः ॥ गोकर्णमिति नाम्नैं तत्त्रैलोक्ये परिगीयते ॥३१॥ पाता-लादूर्ध्वगमने योनिकल्पमभूद्यतः ॥ रुद्रयोनिरिति ख्यातं पुण्यक्षेत्रेषु गण्यते ॥३२॥ कल्पान्तेऽप्या-वर्तरूपं वरुणालयमध्यभाक् ॥ न विनश्यति तस्माच्च वरुणावर्तसंज्ञकम् ॥३३॥ ये स्मरिष्यन्ति गोकर्णं प्रातरुत्थाय नित्यशः ॥ तेषां रात्रिकृतं पापं तत्क्षणादेव नश्यति ॥३४॥ एवं दिवा कृतं पापमपराह्णे

प्रणश्यति ॥ पञ्चक्रोशपरीमाणं क्षेत्राणामुत्तमोत्तमम् ॥३५॥ ये पश्यन्ति महाक्षेत्रं गोकर्णं सुरपूजितम् जन्मप्रभृतियत्तेषां कृतं पापं विनश्यति ॥३६॥ स्नानं कुर्वन्ति ये तत्र गोकर्णे तीर्थसत्तमे ॥ तेषां त्रिज न्माचरितं पापं नश्यत्यसंशयः ॥ ३७ ॥ यथा कैलासशिखरे यथा मन्दरमूर्धनि ॥ निवसामि सदा देव्या तथा गोकर्णमण्डले ॥३८॥ श्रीशैलकाश्योरपि रामसेतौ गोकर्णमुख्येष्वपि पुण्यभूमिषु ॥ आ रभ्यतस्मादपि मुख्यदेशात्सद्योजनैर्द्वादशभिश्च मण्डलम् ॥३९॥ इत्युक्त्वा धरणीं रुद्रो दृष्ट्वा सृष्टिं स्व यंभुवः ॥ क्रुद्धः सन् तां संजिहीर्षुः किञ्चिदीशानभागगः ॥४०॥ प्रमथान्ससृजे तत्र तावद्विष्णुरुपा- गतः ॥ उवाच रुद्रं भो देव क्षम्यतां ब्रह्मणा कृतम् ॥४१॥ अन्ते त्वमेव संहर्ता क्रोधमद्योपसंहर ॥ ततः प्रसन्नो भगवान्प्राहानुग्राहकं वचः ॥ ४२ ॥ दिधक्षोर्मम संस्थित्या भूयादीशानभूरियम् ॥ रुद्रभूमिरिति ख्याता मोक्षदा दहनान्नृणाम् ॥४३॥ प्रकृत्या पार्षदैः साकमत्र विष्णो वसाम्यहम् ॥ इ- त्युक्ते शम्भुना विष्णुस्तथास्त्विति ययौ दिवम् ॥ ४४ ॥ सूत उवाच ॥ गोकर्णे सर्वदा वासं मरणं मुक्तिमण्डपे ॥ रुद्रभूम्यां तु दहनं काङ्क्षन्ते विबुधा अपि ॥४५॥ ततो रुद्रश्चिन्तयित्वा भविष्यत्कार्य गौरवम् ॥ स्वप्रतिज्ञा वृथा मा भूदिति ब्रह्मादिषु स्वयम् ॥४६॥ स्थावरान्तेषु यत्सत्त्वं तदाकृष्य

महेश्वरः ॥ तेन सत्त्वेन सौवर्णं निर्ममे मृगमुत्तमम् ॥४७॥ स्वस्य विष्णोर्ब्रह्मणश्च सत्त्वाच्छृङ्गत्रयं तथा ॥
अशेषप्राणिनां सत्त्वाच्चतुष्पादं त्रिनेत्रकम् ॥४८॥ तन्मृगेण ह्यगात्स्वामी सह कैलासमन्दिरम् ॥ ततः
प्रजाः प्रजापालाः सर्वे सत्त्वविवर्जिताः ॥४९॥ सुरासुरमनुष्याश्च ब्रह्माणं शरणं ययुः ॥ ततः स्वयं
भुवा सार्धं सुरा विष्णुमुपागमन् ॥५०॥ उवाच विष्णुस्तान्देवान् सत्त्वं रुद्रेण वै हृतम् ॥ तं गत्वा वि
बुधश्रेष्ठा याचिष्यामः कृपानिधिम् ॥५१॥ इति निश्चित्य ते सर्वे कैलासमगमन् सुराः ॥ पूजयित्वा
महादेवं प्रार्थयामासुरीहितम् ॥५२॥ ततस्तुष्टः शिवः प्रादात्तेभ्यः सत्त्वमयं मृगम् ॥ प्रीताः सुरास्त
द्विभज्य जगृहुः सत्त्वमात्मनः ॥५३॥ ब्रह्मा विष्णुश्च रुद्रश्च स्वीयं शृङ्गं समाददे ॥ तच्छृङ्गं पूजयन्नास्ते
रुद्रो भक्त्यानुकम्पया ॥५४॥ एतदेव प्राणलिङ्गं चात्मलिङ्गमितीर्यते ॥ य एतत्पूजयेद्भक्त्या स प्राप्नो
तीप्सितं ध्रुवम् ॥५५॥ शृणुध्वमस्य माहात्म्यं सर्वलोकैकविश्रुतम् ॥ त्रैलोक्यस्याधिपत्याय देवदानव
योः पुरा ॥५६॥ युद्धो बभूव तुमुलो देवास्तत्र पराजिताः ॥ दानवैर्हृतसर्वस्वा ईश्वरं शरणं ययुः ।५७
तदादेशाल्लिङ्गमेतदाराध्य पुनराहवे ॥ निर्जित्य दानवान्देवा अलभन्त मनोरथान् ॥५८॥ एवमादि
कथाः श्रुत्वा रावणोऽस्य जिघृक्षया ॥ कैलासपर्वतं गत्वा तप उग्रं समाचरत् ॥५९॥ अत्रान्तरे नारद

स्तु गतः कैलासपर्वतम् ॥ तत्र रावणमन्वीक्ष्य स्वर्गमेत्याह वज्रिणम् ॥६०॥ कैलासे रावणस्तीव्रं तपश्चरति दुश्चरम् ॥ मृगशृङ्गं नेतुकामः पुरा युष्माभिरर्चितम् ॥६१॥ नीते लिङ्गे रावणेन निःश्रीकाः स्युर्ध्रुवं सुराः ॥ तस्माद्विघ्नं कुरु क्षिप्रमित्युक्त्वागाद्यथागतम् ॥६२॥ ततः सम्मंत्र्य गुरुणा साकं शक्रोऽमरैः सह ॥ पौलस्त्यतपसे विघ्नं कर्तुं कैलासमभ्यगात् ॥ ६३ ॥ अत्रान्तरे रावणोऽपि तोषयित्वा महेश्वरम् ॥ पञ्चब्रह्मात्मकमिदं न निधेहि भुवि क्वचित् ॥ ६४ ॥ इति तेनाप्यनुज्ञातो लिङ्गं सम्पाद्य सादरम् ॥ स्वपुरं पादचारेण निर्ययौ दक्षिणामुखः ॥६५॥ अथात्र देवाः कैलासगिरिमेत्य महेश्वरम् ॥ पप्रच्छुरभिवाद्येशं रावणस्य विचेष्टितम् ॥ ६६ ॥ स तानुवाच भो देवा लिङ्गं सम्पाद्य रावणः ॥ निरगात्पादचारेण लङ्कां दक्षिणदिङ्मुखः ॥६७॥ गानेन तपसा लुब्धो लिङ्गं तस्मै ददावहम् ॥ परन्त्वयमपात्रोऽतिदुष्टात्मा इति निश्चयः ॥६८॥ अतस्तस्य कराल्लिङ्गं गलितं सद्यथा भुवि ॥ प्रतिष्ठितं भवेच्छीघ्रं प्रयतध्वं तथा सुराः ॥६९॥ इत्यवाप्य शिवस्याज्ञामन्विष्यन्तो दशाननम् ॥ सप्तकोटीश्वरं जग्मुर्देवा नारदबोधिताः ॥ ७० ॥ दशाननोऽपि मध्याह्ने तत्र स्थित्वाह्निकं चरन् ॥ पूजां निर्वर्तयामास सप्तकोटीश्वरस्य च ॥ ७१ ॥ तत्र देवान्निरीक्ष्यैव शङ्कितः क्रोधमूर्छितः ॥ गोकर्णाभिमुखः प्रागा

द्रावणो मेघगर्जनः ॥ ७२ ॥ तमन्वयाताः शक्राद्या लिङ्गस्य स्थापने तदा ॥ विष्णुं सम्प्रार्थयामासु-
रुपायश्चिन्त्यतामिति ॥ ७३ ॥ ततो विष्णुः कार्यमेतदुपदिश्य गजाननम् ॥ प्राहिणोद्रावणमनु स्वयं
चागात्सहायकृत् ॥ ७४ ॥ पितृस्थालीसमीपे तु यावद्गच्छति रावणः ॥ तावच्च विष्णुर्भगवानलौकि-
क्यात्ममायया ॥७५॥ चक्रेण सूर्यमाच्छाद्य सन्ध्यामेवावभासयत् ॥ अस्तंगतोऽर्क इत्येवं मन्यमानो
दशाननः ॥ ७६ ॥ कथं सन्ध्यामुपासिष्ये धृत्वा लिङ्गं करेऽधुना ॥ इति चिन्ताकुलस्तावद्गजास्यं बटु-
रूपिणम् ॥७७॥ दृष्ट्वा तस्य करे लिङ्गं दित्सुरेवमुवाच तम् ॥ मुनिपुत्र गृहाणेदं लिङ्गरत्नं मुहूर्तकम् ।७८
नद्यामस्यां विधिं सान्ध्यं समाप्यादास्य आश्वहम् ॥ पञ्चब्रह्मात्मकं चैतन्न निधेहि महीतले ॥ ७९ ॥
एवमुक्तो रावणेन गजास्यः प्रत्युवाच तम् ॥ अहो गुरुतमं ह्येतत्कार्यार्थी बटुरप्यहम् ॥८०॥ अवश्य
मेव वाह्यं चेन्न सहेय चिरं क्वचित् ॥ तदहं त्वां त्रिराहूय निधास्ये त्वय्यनागते ॥ ८१ ॥ इत्युक्त्वा ज
गृहे लिङ्गं सन्ध्यां दध्यौ च रावणः ॥ तावद्देवाः प्राणलिङ्गे त्रिलोकीभारमादधुः ॥८२॥ तदा वोढु
मशक्तस्त्रिरुच्चैरुद्घुष्य रावणम् ॥ गजास्यः स्थापयामास लिङ्गं श्लेष्मातके वने ॥ ८३ ॥ वैवस्वतेऽन्तरे
राजन् त्रयोविंशतिमे शुभे ॥ त्रेतायुगे त्वीश्वराब्दे शरत्काले नृपोत्तम ॥८४॥ ऊर्जशुक्लप्रतिपदि व्यती-

स्तु गतः कैलासपर्वतम् ॥ तत्र रावणमन्वीक्ष्य स्वर्गमेत्याह वज्रिणम् ॥६०॥ कैलासे रावणस्तीव्रं तपश्चरति दुश्चरम् ॥ मृगशृङ्गं नेतुकामः पुरा युष्माभिरर्चितम् ॥६१॥ नीते लिङ्गे रावणेन निःश्रीकाः स्युर्ध्रुवं सुराः ॥ तस्माद्विघ्नं कुरु क्षिप्रमित्युक्त्वागाद्यथागतम् ॥६२॥ ततः सम्मंत्र्य गुरुणा साकं शक्रोऽमरैः सह ॥ पौलस्त्यतपसे विघ्नं कर्तुं कैलासमभ्यगात् ॥ ६३ ॥ अत्रान्तरे रावणोऽपि तोषयित्वा महेश्वरम् ॥ पञ्चब्रह्मात्मकमिदं न निधेहि भुवि क्वचित् ॥ ६४ ॥ इति तेनाप्यनुज्ञातो लिङ्गं सम्पाद्य सादरम् ॥ स्वपुरं पादचारेण निर्ययौ दक्षिणामुखः ॥६५॥ अथात्र देवाः कैलासगिरिमेत्य महेश्वरम् ॥ पप्रच्छुरभिवाद्येशं रावणस्य विचेष्टितम् ॥ ६६ ॥ स तानुवाच भो देवा लिङ्गं सम्पाद्य रावणः ॥ निरगात्पादचारेण लङ्कां दक्षिणदिङ्मुखः ॥६७॥ गानेन तपसा लुब्धो लिङ्गं तस्मै ददावहम् ॥ परन्त्वयमपात्रोऽतिदुष्टात्मा इति निश्चयः ॥६८॥ अतस्तस्य कराल्लिङ्गं गलितं सद्यथा भुवि ॥ प्रतिष्ठितं भवेच्छीघ्रं प्रयतध्वं तथा सुराः ॥६९॥ इत्यवाप्य शिवस्याज्ञामन्विष्यन्तो दशाननम् ॥ सप्तकोटीश्वरं जग्मुर्देवा नारदबोधिताः ॥ ७० ॥ दशाननोऽपि मध्याह्ने तत्र स्थित्वाह्निकं चरन् ॥ पूजां निर्वर्तयामास सप्तकोटीश्वरस्य च ॥७१ ॥ तत्र देवान्निरीक्ष्यैव शङ्कितः क्रोधमूर्छितः ॥ गोकर्णाभिमुखः प्रागा

द्रावणो मेघगर्जनः ॥ ७२ ॥ तमन्वयाताः शक्राद्या लिङ्गस्य स्थापने तदा ॥ विष्णुं सम्प्रार्थयामासु-
रुपायश्चिन्त्यतामिति ॥ ७३ ॥ ततो विष्णुः कार्यमेतदुपदिश्य गजाननम् ॥ प्राहिणोद्रावणमनु स्वयं
चागात्सहायकृत् ॥ ७४ ॥ पितृस्थालीसमीपे तु यावद्गच्छति रावणः ॥ तावच्च विष्णुर्भगवानलौकि-
क्यात्ममायया ॥७५॥ चक्रेण सूर्यमाच्छाद्य सन्ध्यामेवावभासयत् ॥ अस्तंगतोऽर्क इत्येवं मन्यमानो
दशाननः ॥ ७६ ॥ कथं सन्ध्यामुपासिष्ये धृत्वा लिङ्गं करेऽधुना ॥ इति चिन्ताकुलस्तावद्गजास्यं बटु-
रूपिणम् ॥७७॥ दृष्ट्वा तस्य करे लिङ्गं दित्सुरेवमुवाच तम् ॥ मुनिपुत्र गृहाणेदं लिङ्गरत्नं मुहूर्तकम् ।७८
नद्यामस्यां विधिं सान्ध्यं समाप्यादास्य आश्वहम् ॥ पञ्चब्रह्मात्मकं चैतन्न निधेहि महीतले ॥ ७९ ॥
एवमुक्तो रावणेन गजास्यः प्रत्युवाच तम् ॥ अहो गुरुतमं ह्येतत्कार्यार्थी बटुरप्यहम् ॥८०॥ अवश्य
मेव वाह्यं चेन्न सहेय चिरं क्वचित् ॥ तदहं त्वां त्रिराहूय निधास्ये त्वय्यनागते ॥ ८१ ॥ इत्युक्त्वा ज
गृहे लिङ्गं सन्ध्यां दध्यौ च रावणः ॥ तावद्देवाः प्राणलिङ्गे त्रिलोकीभारमादधुः ॥८२॥ तदा वोढु
मशक्तस्त्रिरुच्चैरुद्घुष्य रावणम् ॥ गजास्यः स्थापयामास लिङ्गं श्लेष्मातके वने ॥ ८३ ॥ वैवस्वतेऽन्तरे
राजन् त्रयोविंशतिमे शुभे ॥ त्रेतायुगे त्वीश्वराब्दे शरत्काले नृपोत्तम ॥८४॥ ऊर्जशुक्लप्रतिपदि व्यती-

पाते रवेर्दिने ॥ तुलामासे मीनलग्ने विशाखायां प्रतिष्ठितम् ॥ ८५ ॥ ततो विष्णुः स्वकं चक्रमुपसंहृत वान्नवे: ॥ अथ देवगणा लिङ्गे पुष्पाणि ववृषुर्मुदा ॥८६॥ शशंसुश्च स्तवैर्दिव्यैः शिवं विष्णुं गजाननम् ॥ वीणावेणुमृदङ्गाद्यैर्ननृतुश्चाप्सरोगणाः ॥८७॥ इति श्रीस्कान्दे गोकर्णखण्डे श्रीगोकर्णमाहात्म्ये सारोद्धारे प्रथमोऽध्यायः ॥ ॥ १ ॥ ॥ छ ॥ ॥ छ ॥

सूत उवाच ॥ ततो दशाननः सूर्य गगने दीप्ततेजसम् ॥ ददर्श च गजास्येन भूम्यां लिङ्गं प्रतिष्ठितम् ॥ १ ॥ कोपेन महताविष्टो लिङ्गस्यान्तिकमाययौ ॥ दोर्भ्यां लिङ्गं प्रगृह्याशु जानुभ्यामवनिं गतः ॥२॥ चकर्ष सर्वबलतो रावणो राक्षसाधिपः ॥ न शशाक तदुद्धर्तुं न्यपतन्मूर्च्छितः स्वयम् ॥३ ततः कलकलः शब्दस्तत्रात्यन्तमभून्नृप ॥ तत्र देवाश्च ऋषयः स्थापयामासुरुत्तमम् ॥४॥ त्रिषु लोकेषु विख्यातं लिङ्गं कलकलेश्वरम् ॥ यस्य दर्शनमात्रेण महापापं विनश्यति ॥५॥ तस्य लिङ्गस्य सविधे ह्युदीच्यां दिशि संस्थितः ॥ वैवाहिकोनाम गिरिः सर्वसिद्धनिषेवितः ॥ ६ ॥ तत्र गत्वा यस्तु राजन् दक्षिणाशां विलोकयन् ॥ प्रदक्षिणीकृत्य गिरिं स्थित्वा तस्य तले शुभे ॥७॥ अष्टाक्षरं जपेन्मन्त्रमृषिछन्दस्सदैवतम् ॥ उच्चैः शब्दं प्रकुर्वीत हर३ इत्यथवा हरे३ ॥ ८ ॥ मूर्ध्नि तस्याकाशगङ्गाभिषिञ्चति

न संशयः ॥ एवं यः कुरुते राजन्नमृतत्वं स गच्छति ॥९॥ सूत उवाच ॥ लब्धसंज्ञो मुहूर्तेन रावणः
क्रोधविह्वलः ॥ गजास्यं ताडयामास मस्तके दृढमुष्टिना ॥१०॥ एवं वितथयत्नोऽसौ रावणो वञ्चितः
सुरैः ॥ लज्जितो गूढमम्बोधिं तीर्त्वा स्वपुरमाविशत् ॥११॥ गजाननोऽपि लिङ्गस्य आग्नेयां दिशि पृ-
ष्ठतः ॥ पश्चिमाभिमुखो भूत्वा चत्वारिंशत्पदे स्थितः ॥१२॥ देवाश्च गण्डकीक्षेत्राच्छालग्रामशिलामयम्
पीठमानाय्य लिङ्गस्य योजयामासुरुत्तमम् ॥१३॥ अथ वायुमुखात्सर्वं वृत्तं श्रुत्वा महेश्वरः ॥ गो-
कर्णमेत्य तल्लिङ्गं गजास्येन प्रतिष्ठितम् ॥१४॥ रावणस्य नखक्षुण्णं दृष्ट्वा चात्मन्यतीतपत् ॥ अप-
राधो ममैवात्र यद्दुष्टस्य वशे कृतम् ॥१५॥ तत्रेदं नु महद्भाग्यं गोकर्णे सुप्रतिष्ठितम् ॥ जन्मभूमित्व-
बुध्या हि ममाप्यस्त्यत्र गौरवम् ॥१६॥ अतो मम करे एव स्थितमेतन्न संशयः ॥ एवं मनः समा-
धाय देवान्प्रोवाच शङ्करः ॥१७॥ लिङ्गरत्नमिदं देवा अजैषीद्रावणं बलात् ॥ त्रैलोक्ये बलिनं तस्मा
दस्य नाम महाबलम् ॥१८॥ इत्युक्त्वा प्रणनामाथ पार्वत्या सह पार्षदैः ॥ महाबलं प्रतुष्टाव शङ्करो
भरतर्षभ ॥१९॥ नमस्ते राजलिङ्गाय लिङ्गरत्नाय ते नमः ॥ नमस्ते रावणभुजगर्वसर्वस्वहारिणे ॥२०
नमोऽसद्भागधेयाय नमस्ते त्रिगुणात्मने ॥ दन्तावलाननकृतप्रतिष्ठाय नमो नमः ॥२१॥ नमो वेद

शिरोवेद्यज्योतिरानन्दमूर्तये ॥ नमस्त्रिशिरसे तुभ्यं भवरोगभयच्छिदे ॥२२॥ गोकर्णक्षेत्रवासाय महाबल नमो नमः ॥ स्तुत्वैवं स गजास्यस्यान्तिकमेत्य तमाश्लिषन् ॥२३॥ मूर्ध्नि तस्य व्रणं दृष्ट्वा सान्त्वयन्निदमब्रवीत् ॥ आदौ त्वामर्चयित्वा योऽर्चयतीह महाबलम् ॥२४॥ वांच्छितार्थं स लभतां मत्प्रसादादसंशयम् ॥ इत्युक्त्वा पूजयामास विघ्नेशं विधिपूर्वकम् ॥ २५ ॥ ततो महाबलं राजन्पूजयित्वाह शङ्करः ॥ भो देवाः कार्तिके मासे लिङ्गमेतत्प्रतिष्ठितम् ॥२६॥ तस्मादहं वसाम्यत्र कार्तिके स्वगणैः सह ॥ भवन्तोऽपि वसन्त्वत्र पूजयामो महाबलम् ॥ २७ ॥ यस्तदा कोटितीर्थेऽत्र स्नात्वा लिङ्गं प्रपूजयेत् ॥ शक्त्या च किंचिद्दद्याच्चेत्कर्मबन्धात्स मुच्यते ॥२८॥ यद्यद्दत्तं हुतं जप्तं कृतं कर्म सुरोत्तमाः ॥ तदनन्तफलं चास्तु नराणां मत्प्रसादतः ॥२९॥ तत्र गोकर्णयात्रायां विषुयुक्कार्तिको वरः ॥ माघकृष्णचतुर्दश्यां निशीथे यो महाबलम् ॥३०॥ एकेन बिल्वपत्रेणाप्यणुमात्रजलेन वा ॥ पूजयेत्तस्य माहात्म्यं नालं ब्रह्मापि वर्णितुम् ॥३१॥ गोकर्णं बिल्वपत्रं च लिङ्गरत्नमहाबलम् ॥ शिवरात्रिश्चेति देवा दुर्लभं हि चतुष्टयम् ३२ तस्मिन्काले तु यद्दत्तमेकं कोटिफलप्रदम् ॥ इत्युक्त्वा स प्रसन्नात्मा ययौ कैलासपर्वतम् ॥३३॥ तदा प्रभृति गोकर्णे वासं चक्रुर्दिवौकसः ॥ महाबलमिति प्राहुर्लिङ्गं त्रिभुवनेश्वरम् ॥३४॥ देवं महाबलं

राजन्पूजयन्ति सुरर्षयः ॥ तस्मात्पुण्यतमं लिङ्गमन्यन्नास्ति जगत्त्रये ॥३५॥ महाबलसमं लिङ्गं न भूतं न भविष्यति ॥ कृते महाबलं श्वेतं त्रेतायामतिलोहितम् ॥३६॥ द्वापरे पीतवर्णं च कलौ श्यामं भविष्यति ॥ घोरे कलियुगे प्राप्ते मृदुतामुपयास्यति ॥३७॥ दृष्ट्वा वा दिव्यलिङ्गं च श्रुत्वा वा सागरध्वनिम् ॥ कोटितीर्थे नरः स्नात्वा पुनर्जन्म न विन्दते ॥४८॥ सर्वाण्यश्मानि लिङ्गानि तीर्थान्यम्भांसि सर्वशः॥ सर्वे तपस्विनोराजन् गोकर्णे सुरपूजिते ॥३९॥ अपि पापशतं कृत्वा ब्रह्महत्यादि मानवः ॥ सकृत्प्रविश्य गोकर्णं सद्यो मुच्येत पातकैः ॥४०॥ यत्रेन्द्रब्रह्मविष्ण्वादिदेवानां प्रीतिकाम्यया ॥ महाबलाभिधानेन शिवः सन्निहितः स्वयम् ॥४१॥ अत्रैकेन दिनेनापि यत्कृतं कर्म चोत्तमम् ॥ तदन्यत्राब्दलक्षेण भविष्यति सुसम्भृतम् ॥ ४२ ॥ इन्द्रो ब्रह्मा मुकुन्दश्च विश्वेदेवा मरुद्गणाः ॥ आदित्या वसवो रुद्राः शशाङ्कश्च सतारकः ॥ ४३ ॥ एते विमानगतयः सहिताः पार्षदैः स्वकैः ॥ पूर्वद्वारि निषेवन्ते देवदेवं महाबलम् ॥४४॥ कालो मृत्युर्यमः साक्षाच्चित्रगुप्तश्च पालकः ॥ पितृभिः सह रुद्रैश्च दक्षिणद्वारमाश्रिताः ॥४५॥ विभावसुश्चित्ररथश्चित्रसेनो महाबलः ॥ एते गन्धर्ववर्गेण गायन्तः पश्चिमे स्थिताः ॥४६॥ रम्भा कृतस्थला मेना पूर्वचित्तिस्तिलोत्तमा ॥ नृत्यन्ति च पुरः शम्भोरुर्वश्याद्याः सुरस्त्रियः ४७

वसिष्ठः कश्यपः कण्वो विश्वामित्रो महातपाः ॥ जैमिनिश्च भरद्वाजो जाबालिः क्रतुरङ्गिराः ॥४८॥ गौतमो जमदग्निश्च भार्गवोऽत्रिः पराशरः ॥ व्यासः सत्यवतीपुत्रः शुकेन सह कौरव ॥४९॥ एते चान्ये च राजेन्द्र सर्वे ब्रह्मर्षयोऽमलाः ॥ देवं महाबलं भक्त्या उत्तरं द्वारमाश्रिताः ॥५०॥ नारदो वालखिल्याश्च मरीच्याद्याः प्रजेश्वराः ॥ सनकाद्या महात्मान उपरिष्टादुपासते ॥५१॥ तथान्ये मुनयोऽसङ्ख्या जटिनो वल्कलाम्बराः ॥ सेवन्ते परया भक्त्या देवदेवं महाबलम् ॥५२॥ एवं देवाः सगन्धर्वा ये सर्वे देवयोनयः ॥ नागाः पिशाचा वेताला दैतेयाश्चापरे नृप ॥५३॥ नानाविभवसम्पन्ना नानावाहनभूषणाः ॥ महाबलस्य निकटमागत्य भरतर्षभ ॥५४॥ प्रस्तुवन्ति प्रगायन्ति नृत्यन्ति प्रणमन्ति च ॥ लभन्तेऽभीप्सितान्कामात्रमन्ते च यथासुखम् ॥५५॥ तत्र ये ये तपस्तप्तुमावसन्देवतादयः ॥ तेषां तेषामाश्रमश्च तीर्थं लिङ्गं पृथक्पृथक् ॥५६॥ तत्तन्नाम्नैव विख्यातं विद्यते गणितं च तत् ॥ त्रयस्त्रिंशत्कोटितीर्थं लिङ्गं चेति विनिश्चितम् ॥५७॥ सर्वेषां शिवलिङ्गानां सार्वभौमो महाबलम् ॥ कोटितीर्थं च सर्वेषां तीर्थानां मुख्यतां गतम् ॥५८॥ ये मातृपितृहन्तारो ये वा भूतद्रुहः शठाः ॥ गोघ्नाश्चैव कृतघ्नाश्च परदाररताश्च ये ॥५९॥ ते सर्वे प्राप्य गोकर्णं स्नात्वा तीर्थजले शुभे ॥ महाबलं च सं

पूज्य प्रयान्ति शिवमन्दिरम् ॥६०॥ तत्र पुण्यासु तिथिषु पुण्यर्क्षे पुण्यवासरे ॥ व्यतीपातादियोगेषु रविसंक्रमणेषु च ॥६१॥ महाप्रदोषवेलासु शिवपूजा विमुक्तिदा ॥ फलाधिक्यं जपे होमे द्विजार्चादौ व्रतेषु च ॥६२॥ सदा कृतयुगश्चात्र सदा चैवोत्तरायणम् ॥ महाबलालये पुण्ये पुण्यं पुण्यसमृद्धिकृत् ॥६३॥ गोकर्णं सा महाकाशी विश्वनाथो महाबलः ॥ कोटितीर्थं तत्र गङ्गा समुद्रोऽत्र विशिष्यते ॥६३ पृथिव्यां यानि तीर्थानि गङ्गादिसरितश्च याः ॥ विशन्ति सागरं यस्माद्गोकर्णं तद्विशिष्यते ॥६४॥ गोकर्णं रामसेतुश्च काशीति त्रिस्थली स्मृता ॥ त्रिस्थलीषु कृतं कर्म शेषेणापि न गण्यते ॥६५॥ यदा प्राप्नोति गोकर्णं यो वा को वापि मानवः ॥ मुण्डनं चोपवासं च श्राद्धं च विधिवच्चरेत् ॥६६॥ गङ्गायां भास्करक्षेत्रे चौले चैवोपनायने ॥ श्रीशैले यज्ञदीक्षायां प्रायश्चित्तव्रतेषु च ॥६७॥ महागुरुमृतौ चैव महास्वामिमृतावपि ॥ जीवत्पितापि कुर्वीत वपनं श्राद्धमेव च ॥६८॥ नवमासात्परं चैव पुनः क्षेत्रं विशेद्यदि ॥ क्षौरोपोषणकादीनि कुर्यादेव न संशयः ॥६९॥ रुद्रेणाधिष्ठितं पुण्यं भास्करक्षेत्रमुच्यते ॥ काशी पुष्पगिरिः काञ्ची निवृत्ताख्याह्यलंपुरी ॥७०॥ श्रीशैलः श्रीविरूपाक्षः सेतुः केदार एव च ॥ गोकर्णं च दशैतानि भास्कराण्याहुरुत्तमाः ॥७१॥ आदौ स्नात्वा कोटितीर्थे स्थापयेद्ब्रह्मदण्डकम् ॥ क्षौरं कृत्वा विधानेन स्नानं दशविधं चरेत् ॥७२॥ भस्मगोमयमृद्वादि पञ्चगव्यं तथैव च ॥

मलापकर्षणं चैव स्नानं दशविधं स्मृतम् ॥७३॥ एवं स्नात्वा विधानेन श्राद्धं कुर्याच्च भक्तितः ॥ ततः समुद्रे विधिवत्स्नात्वा पिण्डादिकं चरेत् ॥७४॥ पृथिव्यां सर्वतीर्थानि समुद्रं प्रविशन्ति हि ॥ तस्मात्समुद्रो ह्यधिकः स्नानमात्राद्धि मुक्तिदः ॥ ७५ ॥ रवीन्दुसौम्यवारेषु यदा दर्शो भविष्यति ॥ तदा जलनिधौ स्नानमनन्तफलदं स्मृतम् ॥७६॥ सेतौ सिन्धौ सरस्वत्यां गोकर्णे पुरुषोत्तमे ॥ उदन्वदम्भसि स्नानं सार्वकालं विधीयते ॥ ७७ ॥ क्षेत्रेष्वन्येषु सर्वेषु पर्वण्येव विधीयते ॥ गोकर्णे सर्वकालं च सिन्धुस्नानं समाचरेत् ॥७८॥ पिप्पलादं कविं कण्वं कृतान्तं जीवितेश्वरम् ॥ मन्युं च कालरात्रिं च विद्यां दुर्गां गणाधिपम् ॥ ७९ ॥ देवानृषीन्पितॄंश्चैव तर्पयित्वा विधानतः ॥ पुनः स्नानं च कृत्वैव ब्राह्मणेभ्यो यथाविधि ॥८०॥ गोभूतिलहिरण्यादिदानं दद्यात्सदक्षिणम् ॥ पितृस्थालीं समासाद्य पितॄणां पिण्डदो भवेत् ॥८१॥ स्वर्गं प्रयान्ति पितरः कुलकोटिसमन्विताः ॥ स्नात्वा रुद्रपदे चैवमर्चयित्वा महाबलम् ॥८२॥ शृणुयात्तीर्थमाहात्म्यं कुर्याच्च निशि जागरम् ॥ ब्राह्मणान्भोजयेत्पश्चात्स्वयं भुञ्जीत वाग्यतः ॥ ८३ ॥ एवं क्षेत्रविधिं कुर्वन् स्नायात्तीर्थेषु च क्रमात् ॥ त्रयस्त्रिंशत्सु मुख्येषु त्रयस्त्रिंशद्दिनैर्नृप ॥ ८४ ॥ तत्रस्थं चार्चयेल्लिङ्गं तीर्थनामानि मे शृणु ॥ गोकर्णं[1] गुहतीर्थं[2] च ताम्रगौरी[3]

च निम्नगा ॥८५॥ गायत्रं[4] च तथा ब्राह्मं[5] ब्रह्मकुण्डमतः[6] परम् ॥ विश्वामित्रं सङ्गमं च चक्रं[9] कापिल-[10]
मेव च ॥८६॥ अरण्यमग्नितीर्थं[11,12] च वैनायकमतः[13] परम् ॥ [14]कौबेरं नादतीर्थं[15] च ततः सांवर्तकं[16] शुभम्
॥८७॥ सूर्यं[17] च मार्कण्डेयं[18] च पापनाशनतीर्थकम्[19] ॥ दुर्गाकुण्डं[20] नागतीर्थं[21] कोटितीर्थमतः[22] परम् ॥८८॥
उन्मज्जनं[23] महातीर्थं नदी वैतरणी[24] तथा ॥ अशोकपञ्चकं[25] चैव गङ्गाधारमतः[26] परम् ॥८९॥ भीमकुण्डं[27]
तथागस्त्यं[28] वसिष्ठं[29] गरुडं[30] तथा ॥ मालिन्याख्या[31] नदी शुक्ला शिंशुमारमिहोच्यते[32] ॥९०॥ एकबिन्द्वादि-[33]
बिन्दूनां चतुष्कं त्वेकमुच्यते ॥ एतान्येकैककोटीनां तीर्थानां नायकानि तु ॥९१॥ ब्रह्माण्डोदरतीर्थानि
करैः स्पृष्टानि ते रवे ॥ तेन सत्येन गोकर्णे तीर्थेष्वावाहितो भव ॥९२॥ इमं मन्त्रं समुच्चार्य स्नायात्तीर्थे-
षु च क्रमात् ॥ स्नातुमेतेष्वशक्तश्चेत्स्नायादष्टसु वा नृप ॥९३॥ गोकर्णं गुहतीर्थं च ताम्रगौरी च निम्न
गा ॥ गायत्रं कोटितीर्थं च ब्रह्मकुण्डमतः परम् ॥९४॥ रामतीर्थं सङ्गमं चेत्यष्टौ तीर्थान्यनुक्रमात् ॥
गोकर्णं शतशृङ्गं च ताम्रगौरीं च निम्नगाम् ॥९५॥ तीर्थराजं समुद्रं च संस्मरेत्पुण्यपञ्चकम् ॥ य एवं
कुरुते भक्त्या क्षेत्रमासाद्य यत्नतः ॥९६॥ महाबलप्रसादेन लब्ध्वा पुण्यमनन्तकम् ॥ भुक्त्वेह भोगा-
न्विविधान् शिवलोकं व्रजेदसौ ॥९७॥ इति श्रीस्कान्दे० गोकर्णमाहात्म्ये द्वितीयोऽध्यायः ॥२॥

॥ सूत उवाच ॥ शृणु राजन्प्रवक्ष्यामि शतशृङ्गगिरेः कथाम् ॥ कोटितीर्थस्य चोत्पत्तिं माहात्म्य मपि पुण्यदम् ॥ १ ॥ आसन् हिमवतः पृष्ठे त्रीणि स्थानानि पार्थिव ॥ पूर्वस्यामिन्द्रनीलाद्रिर्विष्णोस्था नमनुत्तमम् ॥२॥ पश्चिमे शङ्करस्थानं कैलासाद्रिरभून्नृप ॥ ब्रह्मणो वसतिर्मध्ये शतशृङ्गगिरिर्महान् ॥ ३ ॥ चम्पकाद्यैर्वृतो वृक्षैः सर्वर्तुकुसुमान्वितैः ॥ देवगन्धर्वसिद्धाद्यैः पुण्यैस्तीर्थैः समन्वितः ॥४॥ अथै-कदा तु गरुडः सर्पं दुर्मुखनामकम् ॥ गृहीत्वा खे चरंस्तस्य शतशृङ्गस्य मूर्धनि ॥५॥ सर्पं तमत्तुकामः सन्नधो वृक्षान्व्यलोकयत् ॥ तावत्तस्य मुखाद्भ्रष्टो दुर्मुखो बिलमाविशत् ॥६॥ तमन्विष्यन्नलब्ध्वैव क्रो धादुत्पाट्य तं गिरिम् ॥ गृहीत्वाकाशमार्गेण ययौ खगपतिर्बली ॥७॥ अनेकैर्ऋषिभिः सार्धं ब्रह्मा तत्रा-वसद्गिरौ ॥ आसन् द्विकोटितीर्थानि शृङ्गे हिमवतः शुभे ॥८॥ अथेदं गारुडं कर्म बुध्वा ब्रह्मा चुको-प ह ॥ त्रैलोक्यभारं भगवानात्मन्याधाय सत्वरम् ॥९॥ दधानं शतशृङ्गं तं पीडयामास वै द्विजम् ॥ तस्मिन्काले स गरुडो गोकर्णस्योपरि स्थितः ॥ १० ॥ भारेण दुःखितोऽत्यन्तं दृष्ट्वाधस्तात्तपोवने ॥ अगस्त्यं शरणं याचे कृपालो रक्ष मामिति ॥ ११ ॥ अगस्त्यस्तद्वचः श्रुत्वा मा भैषीरिति च ब्रुवन् ॥ मज्जन्तमब्धौ सगिरिं गरुडं वीक्ष्य सुव्रतः ॥१२॥ अवतार्य गिरिं तत्र रुद्रयोन्यास्तु दक्षिणे ॥ निधाया-

म्भोनिधौ तार्क्ष्यं मोचयामास लीलया ॥ १३ ॥ ततो ध्यानेन विज्ञाय ब्रह्मा तत्रागमत्प्रभुः ॥ अग-
स्त्यं श्लाघयित्वाथ गरुडं चेदमब्रवीत् ॥१४॥ भो वत्स शङ्करस्यैव मनसा चिन्तितं त्विदम् ॥ निमित्त
मात्रं त्वमसि तत्प्रीतोऽस्मि वरं वृणु ॥ १५ ॥ गरुड उवाच ॥ त्रैलोक्यभारं भगवन् वोढुमिच्छाम्य
यत्नतः ॥ न मत्तोऽन्योधिको लोके भवितव्यः पराक्रमे ॥१६॥ ब्रह्मोवाच ॥ त्रैलोक्यभारवहने शक्ति
स्ते स्यादयत्नतः ॥ तत्त्रिलोकगुरुं विष्णुं सर्वदा वह सुव्रत ॥१७॥ नाक्रमिष्यन्त्यायुधानि त्वां सर्वेभ्योऽ
धिकोऽप्यसि ॥ इति तस्मै वरं दत्वा रुद्रमाराध्य तद्गिरौ ॥ १८ ॥ कमण्डलुं च संस्थाप्य सर्वतीर्थमयं
स्वकम् ॥ ब्रह्मा ब्रह्मर्षिभिः सार्धं सत्यलोकं जगाम ह ॥१९॥ गरुडोऽपि वरं लब्ध्वा तपसाराध्य शं
करम् ॥ स्वनाम्ना तीर्थमुत्पाद्य स्थापयित्वा स्वविग्रहम् ॥ २० ॥ अगस्त्यमभिवाद्याथ यतो विष्णुस्ततो
गतः ॥ तदेतद्भुवि विख्यातं गारुडं तीर्थमुत्तमम् ॥२१॥ आश्रमोऽपि च तस्यैव नाम्ना गरुडमण्डपम् ॥
अगस्त्यतीर्थाद्वायव्यां वर्तते नृप तत्र यः ॥२२॥ स्नात्वा गरुडगायत्रीं चतुर्लक्षं जपेन्नरः ॥ सोऽणि-
मादिमहासिद्धिं लभते नात्र संशयः ॥२३॥ अगस्त्योऽपि महातेजाः स्वनाम्ना तीर्थमुत्तमम् ॥ विधा
य लिङ्गं संस्थाप्य वरदेश्वरनामकम् ॥२४॥ बहुकालं तपः कृत्वा सिद्धिं प्राप्य महेश्वरात् ॥ यथाकामं

स गोकर्णे स्थितवान्मुनिसत्तमः ॥२५॥ शतशृङ्गं गिरिवरं नाकपृष्ठं विदुर्बुधाः ॥ ब्रह्मलोक इति प्रोक्तो ब्रह्मावासं च तं विदुः ॥ २६ ॥ रुद्राज्ञया सारभूतं सर्वं तत्रागतं ह्यभूत् ॥ सूत उवाच ॥ गरुडेनानीयमाने गिरौ तस्य भयादिव ॥ २७ ॥ तत्रत्यकोटितीर्थानि एकीभूतानि वै नृप ॥ कोटितीर्थमिति ख्यातं सर्वपापप्रणाशनम् ॥ २८ ॥ तदद्य दृश्यते राजञ्छतशृङ्गोत्तरे तटे ॥ तस्मिन्स्नातः सर्वतीर्थे स्नातो भवति मानवः ॥ २९ ॥ दशाश्वमेधावभृथेन साम्यं वदन्त्याप्ताः कोटितीर्थे द्विजाग्र्याः ॥ महत्पुण्यं पुण्यकृतां वरिष्ठं स्नातास्तस्मिन्नाकपृष्ठं व्रजन्ति ॥३०॥ अन्यानि कोटितीर्थानि पर्यस्तान्यथ सागरे ॥ शतशृङ्गगिरेस्तस्य तटे दक्षिणपश्चिमे ॥ ३१ ॥ अपि पापशतं कृत्वा ब्रह्महत्यादि मानवः ॥ कोटितीर्थे स्नानमात्रान्मुच्यते सर्वपातकैः ॥ ३२ ॥ अत्रैवोदाहरन्तीममितिहासं पुरातनम् ॥ अवन्तिविषये राजा विष्णुवर्मेति चाभवत् ॥३३॥ पुरा कृतयुगे सोऽपि स्वराज्यं प्रतिपालयन् ॥ दासीरजस्वलाद्याश्च कामयामास दुर्मतिः ॥३४॥ ब्रह्महत्यादिपापानि बहूनि कृतवानसौ ॥ तेन चाकृतपापानि न सन्ति धरणीतले ॥३५॥ अतीव पापसन्दोहाद्राजयक्ष्माभवत्ततः ॥ न भिषक् न च वा बन्धुस्त्राता कोऽपि न विद्यते ॥३६॥ न मित्रं न च वा राज्यं न शक्तास्तन्निवारितुम् ॥ तस्मिन्नेवंविधे राज्ञि दैवयोगात्कुरूद्वह

॥३७॥ सनको नाम योगीन्द्रस्तस्य गेहमुपागमत् ॥ नृपभार्या पुण्यशीला नत्वा योगिनमागतम् ॥३८
उवाच श्लक्ष्णया वाचा पाहि मां पतिदानतः ॥ तमागतमभिप्रेत्य विष्णुवर्मा महामतिः ॥३९॥ पू-
जयामास विधिवदुवाच वचनं तदा ॥ कृतार्थोऽस्मि महाभाग भवद्दर्शनमात्रतः ॥४०॥ अनाथं पाप-
कर्माणं विमुखं पुण्यकर्मणि ॥ दुराचाररतं कामलोलुपं पाहि मां मुने ॥४१॥ जन्मान्तरार्जितात्पुण्या
द्भवतो दर्शनं ह्यभूत् ॥ इत्युक्त्वा विररामाथ सनकः प्रत्युवाच तम् ॥४२॥ भो राजञ्छृणु वक्ष्यामि
त्वया यत्पूर्वसंचितम् ॥ भुज्यते विवशेनेह त्राता नान्योऽस्ति कश्चन ॥ ४३ ॥ यत्र वृन्दावनं नास्ति
शालग्रामादिपूजनम् ॥ वेदशास्त्रादिवादो वा नास्ति सज्जनसङ्गमः ॥४४॥ स्वाचारस्य परित्यागो पर-
धर्मपरिग्रहः ॥ सदा पापरतिर्यत्र तत्र स्युः सकला रुजः ॥४५॥ पूर्वजन्मनि वा पापमिह जन्मनि वा
कृतम् ॥ अवश्यमेव भोक्तव्यं राजन् कर्म शुभाशुभम् ॥४६॥ त्वं तु जन्मान्तरे जातो वेश्यायां शूद्र-
पूरुषात् ॥ धर्मध्वज इति ख्यातो लुब्धकः प्राणिहिंसकः ॥४७॥ पापकर्मरतो नित्यं देवब्रह्मस्वहारकः॥
त्वमेकदा माघमासे गङ्गातीरमुपागतः ॥४८॥ तत्र स्वभर्त्रा स्नानार्थमागतां द्विजवल्लभाम् ॥ दृष्ट्वैव का
मसन्तप्तस्तामेवालक्षयन्ततः ॥४९॥ व्याजेन यापयन्कालमवतीर्णः स्वयं जले ॥ स्नानदानादिकं कर्म

चक्रे विप्रस्तया सह ॥५०॥ तत्सर्वं दृष्टवांस्त्वं तु मदविह्वलितो भृशम् ॥ ततः स्वभवनं याते द्विजे तस्मिन्स्वभार्यया ॥५१॥ त्वमप्यनुगतो रात्रौ छिद्रं कृत्वा तु तद्गृहे ॥ प्रविश्यान्तर्निद्रितायास्तस्या अङ्गं परामृशः ॥५२॥ हा चोर इति चुक्रोश सा प्रबुद्धा सती तदा ॥ मिलितास्तत्र बध्वा त्वां निन्यूराजान्तिकं चराः ॥५३॥ राजापि हस्तपादं ते छेदयित्वा पुराद्बहिः ॥ निर्यापयामास गिरेर्मूर्ध्नि निर्जनभीकरे ॥५४॥ तेन दुःखेन महता मृतस्त्वं पर्वतोपरि ॥ तद्वासनाबलेनेहाप्यसि पापरतः सदा ॥५५॥ माघस्नानमहिम्नाद्य पार्थिवत्वमवाप्तवान् ॥ मद्दर्शनममोघं च विप्रस्नानादिदर्शनात् ॥५६॥ पूर्वजन्मार्जितात्पापाद्भुङ्क्षे रोगादिकं त्विह ॥ पापं निरयभोगाय पुण्यं स्वर्गसुखाय हि ॥५७॥ राजोवाच ॥ भगवन् तप्यतेऽन्तर्मे श्रुत्वा पूर्वकथामिमाम् ॥ स्मृत्वा च पापचरितमिह जन्मनि यत्कृतम् ॥५८॥ धिग्जीवितं ममैतस्य ध्रुवं नरकगामिनः ॥ ब्रह्मन्नेवंविधस्यापि निष्कृतिश्चेद्वद प्रभो ॥५९॥ सनक उवाच ॥ निष्कृतिं संप्रवक्ष्यामि तीव्रतप्तस्य तेऽधुना ॥ सर्वपापविशुद्धः सन् येन त्वं नीरुजो भवेः ॥६० पश्चिमाम्बुधितीरस्थे गोकर्णे क्षेत्रसत्तमे ॥ कोटितीर्थमितिख्यातं विद्यते विमलं सरः ॥६१॥ स्नानेन तत्र पापानि नश्यन्त्येव न संशयः ॥ भो राजन् तव पापस्य यदि निष्कृतिमिच्छसि ॥६२॥ गोकर्ण

क्षेत्रमासाद्य माघमासेऽरुणोदये ॥ कोटितीर्थे विधानेन स्नात्वार्चय महाबलम् ॥६३॥ तदा पापविशुद्धः सन्मोदसे सुचिरं नृप ॥ पुरा तु विघसो नाम ब्राह्मणो भृगुवाक्यतः ॥६४॥ तत्र गत्वा कोटितीर्थे स्नात्वा देवं महाबलम् ॥ अभ्यर्च्य महतः पापात्पूतः शिवमवाप्तवान् ॥६५॥ इत्युक्त्वा सनको योगी यथाकामं जगाम ह ॥ ततः स राजा गोकर्णं माघादौ समपद्यत ॥६६॥ प्रातः स्नात्वा कोटितीर्थे पूजयित्वा महाबलम् ॥ कृत्वा दानानि बहुशः किञ्चित्कालं नृपोत्तम ॥६७॥ स्थित्वा तत्रस्थतीर्थेषु निमज्य च यथाविधि ॥ ततः स्वराज्यमासाद्य भुक्त्वा भोगान्यथेप्सितान् ॥६८॥ पुत्रपौत्रैः परिवृतः कृत्वा यज्ञादिकाः क्रियाः ॥ अन्ते विमानमारुह्य पत्न्या सह दिवं ययौ ॥६९॥ इति श्री० तृतीयोऽध्यायः ॥३॥

शतशृङ्गस्य भागौ द्वौ समुद्रे पतितौ नृप ॥ दुर्गाशृङ्गमिति ख्यातं गोकर्णस्योत्तरेऽपतत् ॥१॥ नागशृङ्गमिति ख्यातमपतद्दक्षिणे नृप ॥ वर्तन्ते पञ्च तीर्थानि नागशृङ्गे महान्ति च ॥ २ ॥ रुद्रकुण्डं नागतीर्थं वसोर्धारमतः परम् ॥ शङ्खतीर्थं सिद्धकुण्डमिति तीर्थानि पञ्च वै ॥ ३ ॥ तीर्थेषु तेषु यः स्नाति सोऽनन्तफलमश्नुते ॥ दशतीर्थानि कौरव्य गौरीशृङ्गे वसन्ति च ॥ ४ ॥ शतानां चैव तीर्थानां तानि मुख्यानि कौरव ॥ गङ्गाधारं वसोर्धारं माहिषं नागतीर्थकम् ॥५॥ गौरीह्रदं च कौमारं कालीह्रदमतः

परम् ॥ मुण्डोद्भवं वारुणं च दश तीर्थानि कौरव ॥६॥ मुख्यानि तानि राजेन्द्र सहस्राणां महान्ति च ॥ नवम्यां तेषु यः स्नाति स पापैर्मुच्यते ध्रुवम् ॥७॥ सूत उवाच ॥ गुहतीर्थं तथा लिङ्गं कुमारेश्वरनाम कम् ॥ रुद्रयोन्याः पूर्वभागे किञ्चिदीशान्यतः स्थितम् ॥८॥ स्रोतसामुत्तमा यत्र ताम्राचलसमुद्गता ॥ यां चोपयेमे भगवान्रुद्रो गौरीवपुर्धराम् ॥९॥ राजोवाच ॥ ताम्राचलेऽपतत्कस्माद्गौरीरूपं दधार सा ॥ रुद्रः कथं तां चकमे एतन्नो वक्तुमर्हसि ॥१०॥ सूत उवाच ॥ पुरा जगत्पतिर्ब्रह्मा ध्यानस्थोऽभू-न्नृपोत्तम ॥ बद्धपद्मासनो देवः संयतात्मा जितेन्द्रियः ॥ ११ ॥ अथैवं ध्यायतस्तस्य तूत्ताने दक्षिणे करे ॥ प्रादुर्बभूव चार्वङ्गी कन्यका वरवर्णिनी ॥ १२ ॥ तां दृष्ट्वा भगवान्ब्रह्मा प्रीतिमानभवत्तदा ॥ आह स रुद्रकान्ता त्वं भविष्यसि वरानने ॥ १३ ॥ इत्युक्ते ब्रह्मणा सा च चकमे रुद्रमेव तु ॥ गोकर्णं तस्य च क्षेत्रं ज्ञात्वा ताम्रगिरौ तदा ॥१४॥ पतिताकाशतो गङ्गा पुण्या त्रिपथगामिनी ॥ अंशेनान्येन परमं दिव्यं रूपं समास्थिता ॥१५॥ ध्यायन्त्येकाकिनी रुद्रं गिरौ तत्र चचार ह ॥ ततस्तत्रागतो रुद्रो वृषारूढस्त्रिलोचनः ॥ १६ ॥ दृष्ट्वैव तं शिवं देवी भक्त्या प्रेमभरेण च ॥ ववन्दे लज्जया चैवाधोमुखी मौनमास्थिता ॥१७॥ ज्ञात्वा सर्वं महादेवः सस्मार च पितामहम् ॥ ब्रह्मा देवगणैः साकमाजगाम तदा-

ञ्जसा ॥१८॥ गौरीं दृष्ट्वाथ हर्षेण ब्रह्मा प्रोवाच शङ्करम् ॥ ब्रह्मोवाच ॥ महता तपसा देव त्वदर्थे नि
र्मिता शुभा ॥१९॥ त्वामेव वरयन्तीयं कल्याणी जगदीश्वरम् ॥ तस्मात्पाणिं गृहाणास्याः सर्वलोकैक
मङ्गलम् ॥२०॥ इत्युक्त्वा विधिवत्तत्र ददौ गङ्गां पिनाकिने ॥ आश्विने कृष्णपक्षे तु चतुर्दश्यां नृपोत्तम
॥२१॥ ददौ मुहूर्ते कल्याणे स्वात्यृक्षे चन्द्रवासरे ॥ ततो ब्रह्मा स्वभवनं सदेवर्षिगणो ययौ ॥२२॥ तदा
प्रभृति राजन् स गिरिर्वैवाहिकोऽभवत् ॥ विवाहस्त्रिजगत्पित्रोर्यतस्तत्र गिरावभूत् ॥२३॥ ताम्रा-
चलस्य सम्बन्धात्ताम्रगौरीति साभवत् ॥ एवं सा ताम्रगौरी तु द्विधा लक्ष्या नृपोत्तम ॥२४॥ एकेन
दिव्यरूपेण ताम्रगौरीति संस्तुता ॥ महाबलस्य निकटे देवी प्राङ्मुखतः स्थिता ॥२५॥ दिव्यरूपधरां
देवीं येऽर्चयन्तीह भक्तितः ॥ तेषामभीप्सितं देवी ददात्येव न संशयः ॥२६॥ नदीरूपेण चान्येन
सर्वपापापनोदिनी ॥ निर्गम्य ताम्राचलतो बहुतीर्थसमन्विता ॥२७॥ वहन्ती दक्षिणामाशां क्रोशार्धं
सा सुपावनी ॥ आवृत्य चोत्तरे किञ्चिद्रुद्रयोनिं गता ततः ॥२८॥ पितृस्थालीसमीपे तु सङ्गता सरि
तां पतिम् ॥ पृथिव्यां यानि तीर्थानि पातालनिलयानि च ॥२९॥ तानि सर्वाणि तीर्थानि ताम्रगौर्यां
न संशयः ॥ तस्मात्तीर्थवरा सा तु नदीनामुत्तमोत्तमा ॥३०॥ पिण्डं तिलोदकं चैव स्नानं तत्र करोति

यः ॥ पितरस्तस्य पुण्येन नरकस्था अपि ध्रुवम् ॥३१॥ तृप्ताः स्वर्गं गमिष्यन्ति पूर्णिमायां विशेषतः ॥ पशुपक्षिमृगाश्चापि तज्जलस्पर्शमात्रतः ॥३२॥ सर्वपापविनिर्मुक्तास्तेपि यान्त्युत्तमां गतिम् ॥ अत्रैकां कथयिष्यामि कथामाश्चर्यकारकाम् ॥ ३३ ॥ कदाचित्ताम्रगङ्गायास्तटे कश्चित्कपीश्वरः ॥ उत्प्लवन्फल-लोभेन प्रमादादपतद्द्रुमात् ॥ ३४ ॥ शिलातलेऽतिमहति तेन मूर्छामवाप सः ॥ क्षणेन लब्धसंज्ञस्तु स्वयमाश्वस्य कृच्छ्रतः ॥३५॥ ताम्रगङ्गातलभवं शनैरारुह्य स द्रुमम् ॥ शाखान्तरे निविष्टस्तु वेदनामसह-न्मृतः ॥३६॥ ततः कतिपयाहस्सु विक्लिन्नात्तु कलेवरात् ॥ शिरोभागोऽपतत्तस्य ताम्रगङ्गाजलेऽमले ॥३७॥ तेनैव पुण्ययोगेन वानरः स नृपोत्तम ॥ संबभूव महिष्यां तु चित्ररूपाख्यभूपतेः ॥३८॥ मुखमात्रमभूत्तस्य कमनीयं नराकृति ॥ शेषं सर्वाङ्गमपि तु वानराकारमद्भुतम् ॥३९॥ विचित्रमिदमा-लोक्य राजा चिन्ताकुलोऽभवत् ॥ दिनेषु गच्छत्सु ततः कुमारः स व्यवर्धत ॥४०॥ कारणं चात्र राजर्षि-श्चिन्तयामास दुःखितः ॥ न मया वञ्चितः कश्चिद्विधात्राहं तु वञ्चितः ॥४१॥ ईदृशस्तनयो जातः कोवा भाग्यविपर्ययः ॥ अत्रापृच्छद्ब्राह्मणांस्तु न शेकुस्ते समीरितुम् ॥४२॥ एतस्मिन्नन्तरे तत्र कश्चित्सिद्ध-वरोऽभ्यगात् ॥ तमर्चयित्वा राजा तु पुत्रवृत्तं व्यजिज्ञपत् ॥ ४३ ॥ ज्ञात्वाथ कारणं सिद्धः सोऽब्रवी-

ज्ञानचक्षुषा ॥ सिद्ध उवाच ॥ एष ते तनयः पूर्वजन्मन्यासीत्तु वानरः ॥४४॥ कदाचित्प्लवमानस्तु प्राप्तो गोकर्णमुत्तमम् ॥ तत्रास्ति ताम्रगौरीति नदी पुण्या सुविश्रुता ॥४५॥ लभन्ते यज्जलस्पर्शात्तिर्यञ्चोप्युत्तमां गतिम् ॥ तत्र तीरद्रुमे दैवादुत्प्लवन्प्लवगोत्तमः ॥४६॥ मृतस्तद्वृक्षशाखायां लग्नं तस्य कलेवरम् ॥ शिरः कालेन विक्लिन्नं ताम्रगङ्गाजलेऽपतत् ॥४७॥ तत्पुण्यजलसंस्पर्शान्मुखमस्य नराकृति ॥ शेषाङ्गं वानराकारं यथापूर्वमभून्नृप ॥४८॥ ताम्रगङ्गामहिम्नासौ वानरोऽपि नरेश्वर ॥ पुत्रः सन्नद्य ते जातो महिष्यां भाग्यशालिनः ॥४९॥ राजन्नद्यापि तच्छेषमङ्गं तद्वृक्षगं कपेः ॥ पातयेत्ताम्रनद्यां तु नृदेहः स्यादयं तदा ॥५०॥ इति सिद्धवचः श्रुत्वा राजा सम्प्रेष्य किङ्करान् ॥ तथैव वृक्षसंस्थं तत्कपेरङ्गमपातयत् ॥५१॥ सद्यः स राजपुत्रोऽभूद्दिव्यमानवदेहवान् ॥ राजलक्ष्मीनिवासश्च बभौ सूर्य इवापरः ॥५२॥ ततः सर्वेऽपि जहृषुः सिद्धश्चागाद्यथागतम् ॥ एवं तस्यास्ताम्रगौर्या माहात्म्यं परमाद्भुतम् ॥५३ शृण्वतां पठतां चापि पापघ्नं च समृद्धिदम् ॥ अस्थिनिक्षेपणं चात्र पितॄणां स्वर्गकारणम् ॥५४॥ यावदस्थिकणं तिष्ठेत्ताम्रगौर्याः शुभे जले ॥ तावत्ते स्वर्महीयन्ते दिव्यभोगोपभोगिनः ॥५५॥ अत्रार्थे कथयिष्येऽहमितिहासं पुरातनम् ॥ उन्मूचिर्नामराजासीत्पुरा प्राचेतसान्तरे ॥५६॥ स सर्वं राज्यमकरो

त्प्रजानां द्रोहकृत्खलः ॥ तेन पापेन महता प्रजा ह्यासन्नुपद्रुताः ॥५७॥ चमसो नाम तत्पुत्रो धर्मात्मा शंसितव्रतः ॥ पितर्युपरते सोऽपि किञ्चिच्छोकसमाकुलः ॥५८॥ संस्कारं तु पितुः कर्तुं वनं प्रायाच्च सर्त्विजः ॥ तत्रान्तरिक्षे शुश्राव पितॄणां भारतीं नृप ॥५९॥ पित्रा तव महाभाग नृशंसेन दुरात्मना ॥ प्राप्ताः स्मो नरकं सर्वे महारौरवसंज्ञकम् ॥ ६० ॥ तस्मादस्मानुद्दिधीर्षुः पैतृकं चास्थिसञ्चयम् ॥ गृहीत्वा याहि गोकर्णं महाबलनिकेतनम् ॥ ६१ ॥ तत्रास्ते ताम्रगौरीति घोरपापहरा शुभा ॥ तत्र गत्वा तु संस्कारं पितुः कुरु विधानतः ॥६२॥ अस्थिनिक्षेपणं तत्र ताम्रगौर्यां कुरुष्व भोः ॥ इति श्रुत्वा तु चमसः पितॄणां वचनं तदा ॥६३॥ तूर्णं प्रविश्य गोकर्णं ताम्रगौर्यां नृपोत्तमः ॥ अस्थिनिक्षेपणं चक्रे पितॄणां स्वर्गकाम्यया ॥६४॥ तेन पापविनिर्मुक्त उन्मूचिस्तत्पिता तदा ॥ पितृभिः सहितः सर्वैः स्वर्गं यातः कुरूत्तम ॥६५॥ यावदस्थीनि जन्तूनां ताम्रगौर्यां वसन्ति हि ॥ तावत्स्वर्गे महीयन्ते दिव्यभोगैः समन्विताः ॥६६॥ ॥ इति श्रीस्कान्दे ० श्रीगोकर्णमाहात्म्ये चतुर्थोऽध्यायः ॥४॥

सूत उवाच ॥ सङ्गमे ताम्रगङ्गायाः समुद्रस्य च सत्तम ॥ विधूतपापस्थालीति स्थानं त्रैलोक्यविश्रुतम् ॥१॥ तस्याधस्ताद्द्रवां माता वर्तते साम्प्रतस्रवा ॥ ब्रह्मणो मानसात्तात जाता पूर्वमनिन्दिता

॥२॥ यस्याः क्षीरादभूत्क्षीरवार्धिस्तस्मादभूत्सुधा ॥ दिव्यं लिङ्गं ततो जातं तदगृह्णन्दिवौकसः ॥३॥ ब्रह्माणं सा तदोवाच स्थानं मे सम्प्रदर्श्यताम् ॥ ब्रह्मोवाच ॥ अयि पुत्रि महादेवः पाताले तपसि स्थितः ॥ ४ ॥ तं प्रार्थयसि चेत्स्थानं स ददाति तवानघे ॥ इत्युक्ता सा तदा देवी पातालं सुरभिर्ययौ ॥५॥ तत्र सर्वात्मकं धेनुर्ददर्श परमेश्वरम् ॥ दृष्ट्वाथ शङ्करो धेनुं प्रणतामग्रतः स्थिताम् ॥६॥ किमिच्छसि वरारोहे तद्ददामीत्युवाच ताम् ॥ धेनुरुवाच ॥ सृष्टा च ब्रह्मणाहं तमयाचं स्थानकाङ्क्षिणी ॥७॥ स च त्वां दर्शयामास तदहं त्वामुपस्थिता ॥ स्थानं कुत्रापि देवेश दर्शयानुत्तमं मम ॥८॥ शङ्कर उवाच ॥ अस्योपरि मम क्षेत्रं गोकर्णं सुरपूजितम् ॥ वर्तते तत्र भद्रे त्वं यथेष्टं वस्तुमर्हसि ॥९ सा तथेति प्रणम्येशं गोकर्णं समुपागता ॥ सङ्गमे ताम्रगङ्गायाः समुद्रस्य च सत्तम ॥१०॥ पापस्थाल्यां महाभागा स्थित्वा समचरत्तपः ॥ देवेषु तत्स्थितं लिङ्गममृतोत्थं पुरातनम् ॥११॥ समादाय प्रतिष्ठाप्य पूजयन्ती समास्थिता ॥ ततः प्रसन्नौ विष्णवीशौ तस्याः प्रत्यक्षतां गतौ ॥ १२ ॥ तौ दृष्ट्वाथजगन्नाथौ ववन्दे सुरभिर्नृप ॥ तौ च तामूचतुर्भद्रे वृणीष्व वरमीप्सितम् ॥१३॥ धेनुरुवाच ॥ स्वदेहोत्थस्य पयसो देवर्षिपितृयोग्यताम् ॥ १४ ॥ एतल्लिङ्गार्चकानां तु महतीं श्रियमेव च ॥ युवयोरत्र सान्निध्यं याचेऽ

हं जगदीश्वरौ ॥१५॥ हरिहरावूचतुः ॥ तथास्तु भद्रे तेऽभीष्टं नौ प्रसादाद्वरानने ॥ स्थानं चैतन्महा
लिङ्गं त्रैलोक्यतिलकं भवेत् ॥१६॥ पितृस्थालीतिनाम्नैतत्स्थानं भवतु विश्रुतम् ॥ अत्र दत्तं हुतं वापि
जप्तं तप्तं च नन्दिनि ॥१७॥ अक्षय्यं तद्भवेद्भद्रे नौ प्रसादादसंशयम् ॥ तामित्युक्त्वात्मनस्तत्र सान्निध्यं
चक्रतुश्च तौ ॥१८॥ सुरभिस्तु ततः सिद्धकामोवास यथासुखम् ॥ गोबिलं नाम तत्रास्ते समुद्रे वरुणा
लये ॥ १९॥ बिलात्तस्माद्विनिष्क्रम्य सागच्छति दिवानिशम् ॥ दिवा मध्यन्दिने रात्रौ मध्यरात्रे स-
मैति सा ॥२०॥ तस्यास्त्वहोरात्रमेतन्नृणां संवत्सरं नृप ॥ मध्यंदिनं च विषुवत्तुला चैवार्धरात्रकम्॥२१
तस्मिन्काले नृपश्रेष्ठ पितृस्थाल्यां समाहितः ॥ देवान्पितॄन्समुद्दिश्य ब्राह्मणेभ्यो धनादिकम् ॥२२॥
दातव्यमत्र विधिवत्कामक्रोधादिकं त्यजेत् ॥ सा धेनुः कामधुग्भूत्वा दातारमुपतिष्ठते ॥२३॥ धेनोः
श्वासानिलस्पर्शात्पापान्यपहतानि वै ॥ दूरं गच्छन्ति राजेन्द्र प्रवाताच्छुष्कपर्णवत् ॥२४॥ विधूतपापाः
पापिष्ठास्तत्रगास्युः पुनः पुनः ॥ अतो विधूतपापा सा स्थाली तु नृपसत्तम ॥२५॥ विधूतपापस्थाली-
ति तस्मात्तत्स्थानमीर्यते ॥ पितृस्थालीति यत्तस्यापरं नाम सुविश्रुतम् ॥२६॥ तत्कारणं शृणुष्वाथ
राजन्पुण्यविवर्धनम् ॥ सूत उवाच ॥ ब्रह्मा जगत्पतिः पूर्वं सन्ध्यारूपी बभूव ह ॥ २७॥ तेन रूपेण

स पितॄन्सृष्टवानब्जसंभवः ॥ सा सन्ध्या सह पुत्रैस्तु तपस्तप्तुमुपाक्रमत् ॥२८॥ विधूतपापस्थाल्यां सा लिङ्गं तदमृतोद्भवम् ॥ अर्चयन्ती स्वतनुजैरर्यमादिभिरन्विता ॥२९॥ तस्यास्तपःप्रभावेण तुतोष परमेश्वरः ॥ सिद्धिर्भवतु ते भद्रे सपुत्रायास्त्वदीप्सिता ॥३०॥ स्थानमेतन्महाभागे सर्वपापहरं भवेत् ॥ पितृस्थालीति विख्यातमद्यप्रभृति शोभने ॥३१॥ पितॄणां परमं क्षेत्रं मत्प्रसादाद्भविष्यति ॥ अत्र दत्तं हुतं चापि पितॄनुद्दिश्य भक्तितः ॥३२॥ अक्षय्यं तद्भवेद्भद्रे मत्प्रसादादसंशयम् ॥ माघकृष्णचतुर्दश्याममायां वा विशेषतः ॥३३॥ पिण्डं तिलोदकं चात्र श्रद्धया यः प्रयच्छति ॥ तस्य वै पितरः सर्वे पूता निर्वाणमाप्नुयुः ॥३४॥ ये पिशाचत्वमायान्ति लोके स्वकृतकर्मणा ॥ तेषामपि विधानेन श्राद्धं यः कुरुते सुतः ॥३५॥ तेन पुण्येन खलु तत्पितरः सपितामहाः ॥ पिशाचत्वविनिर्मुक्ता गतिंगच्छन्ति शाश्वतीम् ॥३६॥ इति दत्वा वरं शम्भुस्तस्मिँल्लिङ्गे तिरोदधे ॥ सूत उवाच ॥ पितरः पितृलोकस्था वदन्त्याशापरायणाः ॥३७॥ अस्माकमन्वये कश्चित्कदा खलु गमिष्यति ॥ पितृस्थालीं गयां वापि गत्वा पुण्यरुचिर्नरः ॥३८॥ पिण्डं तिलोदकं तत्र यश्चास्माकं प्रयच्छति ॥ येनैवं तर्पिताः सर्वे मुक्तिं विन्देम शाश्वतीम् ॥३९॥ सूत उवाच ॥ एवं पितॄणां राजेन्द्र यस्त्वाशां पूरयिष्यति ॥ सोऽपि याति परं स्थानं

पुनरावृत्तिवर्जितम् ॥ ४० ॥ एवं पितॄणां राजेन्द्र यस्त्वाशां पूरयेदिह ॥ स कुलीनः स चोदारः स वंशोद्धारकः पुमान् ॥४१॥ यद्येकवत्सरं दैवात्सन्ध्या लुप्ता भवेत्तदा ॥ पितृस्थाल्यां सकृत्कृत्वा तत्स न्ध्याफलमश्नुते ॥४२॥ एकं वा भोजयेद्विप्रं तत्रस्थो यः समन्त्रकम् ॥ तेन तत्पितरः सर्वे तृप्तिमेष्य-न्ति शाश्वतीम् ॥४३॥ तत्रस्थो रुद्रगायत्रीं यो जपेद्विधिपूर्वकम् ॥ चतुर्विंशतिसाहस्रं तूष्णीं दीक्षासम न्वितः ॥ ४४ ॥ आजन्मसम्भृतं पापं जानताऽजानतापि वा ॥ तन्नश्यति न सन्देहः प्राप्नुयाच्च परं पदम् ॥४५॥ यः सकृत्सङ्गतो वेश्यां कामतोऽकामतोऽपि वा ॥ स तत्र रुद्रगायत्रीं जपन्मासेन शुद्ध्य ति ॥४६॥ ब्रह्महा गुरुतल्पी वा सुरापी परदारगः ॥ तत्रैव रुद्रगायत्रीं जप्त्वाब्देन विशुद्ध्यति ॥४७॥ यावन्तश्च तिला मर्त्यैर्गृहीताः पितृकर्मणि ॥ तावद्वर्षसहस्राणि पितरः स्वर्गवासिनः ॥४८॥ सदा दे-वाश्च पितरः पितृस्थाल्यां वसन्ति हि ॥ नातस्तत्रास्ति यत्तेषामावाहनविसर्जनम् ॥४९॥ पितृस्थालीं समासाद्य यः पितॄनुद्धरिष्यति ॥ स कुलीनः स चोदारः स बुधः स च बुद्धिमान् ॥५०॥ अत्रार्थे क थयिष्येऽहमितिहासं पुरातनम् ॥ चन्द्रिकानगरे पूर्वमास्ते वैश्यो सबान्धवः॥५१॥ धर्मगुप्त इति ख्यातो धनाढ्यः कृपणश्च सः ॥ पुत्रदारसमायुक्तो न धर्मं कृतवानसौ ॥५२॥ पित्रोर्मृतदिने चापि वैधृत्यादि

दिनेषु वा ॥ अर्धोदयादियोगेषु मन्वादिषु युगादिषु ॥५३॥ न दत्तं काञ्चनं किञ्चिद्वस्त्रधान्यादिकं तु वा ॥ द्रव्यलोभेन महता न व्ययं कृतवानसौ ॥५४॥ आगत्यातिथयः काले निराशा भोजनेच्छया ॥ शपन्ति तं दिवारात्रं पिशाचोऽयं भवत्विति ॥५५॥ एवं बहुतिथे काले गृहं दग्धं हुताशनात् ॥ व्याधितः पुत्रदाराद्याः सर्वे पञ्चत्वमागताः ॥५६॥ कुष्ठव्याधियुतः सोऽपि चोरैः सर्वमपाहृतम् ॥ ततोऽतिदुः-खाद्बभ्राम क्षुत्तृड्भ्यां परिपीडितः ॥५७॥ कदाचिद्विपिने घोरे वृक्षमूलमुपाश्रितः ॥ रात्रौ तत्र महा व्याघ्रो भक्षयामास तं नृप ॥५८॥ तेन दोषेण महता पिशाचत्वमवाप्य सः ॥ सह्यारण्ये महाघोरे विजने ह्यवसन्नृप ॥५९॥ तत्र स्थितान्भूतसङ्घान्भक्षयामास नित्यशः ॥ कदाचित्पर्यटन् तीर्थान्कुत्स-स्तत्रागतो ह्यभूत् ॥६०॥ धर्मगुप्तस्तु तं दृष्ट्वा जिघांसुर्भक्षणेच्छया ॥ जगृहे बलवद्दोर्भ्यां कुत्समभ्यर्ण मागतम् ॥६१॥ अथ कुत्सस्पर्शमात्रान्नष्टपापोऽभवद्वणिक् ॥ प्राप्तपूर्वस्मृतिश्चापि त्यक्त्वा तं विप्रपुंगवम् ॥६२॥ ननाम दण्डवद्भूमौ त्राहि त्राहीति च ब्रुवन् ॥ कृपणं पापिनं क्रूरं पैशाचं योनिमागतम् ॥६३ इत्याश्चर्यकरं दृष्ट्वा कुत्सः प्राह पिशाचिनम् ॥ ब्रूहि कस्त्वं घोररूपी किमर्थं चेह तिष्ठसि ॥६४॥ किं कृतं तादृशं पापं येनैवं दुर्गतिं गतः ॥ धर्मगुप्त उवाच ॥ अहं वैश्यो धर्मगुप्तः पापाल्लोभस्यमूलतः ॥६५॥

पैशाचीं योनिमापन्नस्तदुद्धर कृपानिधे ॥ भवतस्स्पर्शमात्रान्मे जाता जन्मान्तरस्मृतिः ॥६६॥ अतो मां दयया ब्रह्मन् त्राहि ते शरणागतम् ॥ कुत्स उवाच ॥ मा भैषीर्धर्मगुप्त त्वामुद्धरिष्याम्यहं ध्रुवम् ॥६७ एहि सार्धं मया वैश्य गोकर्णं क्षेत्रसत्तमम् ॥ तत्र श्राद्धं पितृस्थाल्यां विधिवत्त्वत्कृते त्वहम् ॥६८॥ कृत्वाशु प्रापयिष्येऽद्य गतिं वैश्य तवोत्तमाम् ॥ इत्युक्त्वा तेन सहितः कुत्सो गोकर्णमाययौ ॥६९॥ स्नानं कृत्वा पितृस्थाल्यां वैश्येन सहितो द्विजः ॥ वैश्यनाम्ना कुशग्रन्थिं कृत्वा श्राद्धं विधानतः ॥७०॥ उद्धारयामास च तं पिशाचत्वाद्द्विजोत्तमः ॥ यथाकामं गतः कुत्सो वैश्योऽपि स्वर्गमाप्तवान् ॥७१॥ सूत उवाच ॥ पितृस्थाली महापुण्या सर्वपापहरा शुभा ॥ कथा चैषा पुण्यतमा पठतां शृण्वतां नृप ॥७२॥ ॥ इति श्रीस्कान्दे० श्री गोकर्णमाहात्म्ये पञ्चमोऽध्यायः ॥ ५ ॥ ॥ छ ॥

सूत उवाच ॥ भृगोः ख्यात्यां समुत्पन्नो मृकण्डुर्नाम वै मुनिः ॥ सुमित्रा नाम तस्यासीद्भार्या परमशोभना ॥१॥ तयोर्जज्ञे सुतो धीमान्मार्कण्डेय इति श्रुतः ॥ तदा सन्तोषवेलायां वागुवाचाशरीरिणी ॥ २॥ मृकण्डो तव पुत्रोऽयं षोडशाब्दे मरिष्यति ॥ इति श्रुत्वाथ तद्वाक्यं दम्पती दुःखितौ भृशम् ॥३॥ चक्रतुस्तस्य पुत्रस्य जातकर्मादिकाः क्रियाः ॥ काले गुरुकुलं नीतः पित्रा तेन महात्मना ॥

गुरोः प्रसादाद्वेदानां पारगः स बभूव ह ॥ स्वगृहं पुनरायातो ववन्दे पितरौ स्वकौ ॥५॥ दृष्ट्वा नन न्दतुः पुत्रं दुःखितौ च बभूवतुः ॥ दुःखितौ पितरौ दृष्ट्वा पप्रच्छ स कुतूहलात् ॥६॥ मार्कण्डेय उवाच ॥ हर्षकाले किमर्थं वां दुःखमत्यद्भुतं पितः ॥ मृकण्डुरुवाच ॥ त्वयि जाते तदा वत्स वागु- वाचाशरीरिणी ॥७॥ मृकण्डो तव पुत्रोऽयं षोडशेऽब्दे मरिष्यति ॥ तच्छ्रुत्वावां हृदि हतौ वज्रेणेव सुदुःखितौ ॥८॥ इदानीं द्वादशो वर्षो वर्तते तव वै सुत ॥ आवां तदनुसंस्मृत्य दुःखितौ स्वः सुताधुना ॥९॥ मार्कण्डेय उवाच ॥ दुःखं ते व्यपनेष्यामि तथा मातुर्न संशयः ॥ इत्युक्त्वा तौ स माश्वास्य निर्गतः स्वगृहात्ततः ॥१०॥ मृगोराश्रममासाद्य सर्वं तस्मै न्यवेदयत् ॥ तेनोक्तेन विधा- नेन तपस्तेपे सुदुश्चरम् ॥११॥ चतुर्थे वत्सरे काशीं गत्वा गङ्गातटे शुभे ॥ शिवमेव परं ध्यायन्ना- स्ते वीतभयो मुनिः ॥१२॥ शौचोपविष्टमशुचिमेकदा तं मृकण्डुजम् ॥ अभ्यद्रवद्घोररूपस्त्वन्तरं प्रे- प्सुरन्तकः ॥१३॥ मार्कण्डेयस्तदोद्विग्नो घटं गङ्गाम्बुपूरितं ॥ स्वकरस्थं शिवधिया तमेव परिषस्वजे ॥१४॥ गतायुषमपि ह्येनं कालो हन्तुं न चाशकत् ॥ ततस्तस्माद्घटात्सद्यः शिवः प्रत्यक्षतां गतः ॥१५॥ आविर्भूतं मुनिर्दृष्ट्वाऽभयं तुष्टाव शंकरम् ॥ आयुर्मे नास्ति भगवन्नायुर्मे संप्रकल्पय ॥१६॥

ततोऽब्रवीन्महादेवो मृकण्डुतनयं मुनिम् ॥ मद्भक्तिर्ध्रियतां विप्र चर त्वं तप आयुषे ॥१७॥ गोकर्ण क्षेत्रमासाद्य परितोषय केशवम् ॥ स ते ददाति भगवानायुर्वै मनसेप्सितम् ॥१८॥ तदाहं तत्र या स्यामि ब्रह्मणा सह पुत्रक ॥ इत्युक्त्वान्तर्दधे शम्भुर्मार्कण्डेयस्ततः स्वयम् ॥१९॥ जगाम सिद्धमार्गेण गोकर्ण क्षेत्रमुत्तमम् ॥ तत्राश्रमपदं कृत्वा धर्माश्रमसमीपतः ॥२०॥ लिङ्गं तत्र प्रतिष्ठाप्य तपस्तेपे सुदुश्चरम् ॥ प्रसन्नस्तपसा तस्य प्रत्यक्षोऽभूद्धरिः स्वयम् ॥२१॥ तं दृष्ट्वा देवदेवेशं मार्कण्डेयोऽब्रवीद्व चः ॥ नारायण नमस्तेऽस्तु नमस्ते भक्तवत्सल ॥२२॥ नमस्ते लोककर्त्रे च भर्त्रे हर्त्रे नमो नमः ॥ अथ प्रीतो हरिः प्राह वरं वृणु द्विजेप्सितम् ॥२३॥ अथाययौ शिवस्तत्र ब्रह्मा चायाच्छिवेच्छया ॥२४॥ ब्रह्मोवाच ॥ महाविष्णो मुनिरयं गतायुरपि भक्तितः ॥ रुद्रस्यालोकनादेव जीवयुक्तो बभू-व ह ॥२५॥ जन्मायुतं देवदेव त्वामाराधितवान्पुरा ॥ रुद्रेणायुर्दत्तमेव त्वमप्यस्मै प्रसादय ॥२६॥ विष्णुरुवाच ॥ अजरामरता विप्र मत्प्रसादाद्भविष्यति ॥ दत्तं मया पूर्वमेव शिवभक्त्या न संशयः ॥२७॥ आश्रमस्ते द्विजश्रेष्ठ लोके ख्यातिं गमिष्यति ॥ मार्कण्डेयह्रदे पुण्ये स्नानं कृत्वा यथाविधि ॥२८॥ तस्य त्रिजन्माचरितं स्वल्पं वा यदि वा बहु ॥ पापं प्रशममायाति विष्णुयागफलं लभेत्

॥२९॥ इति तस्मै वरं दत्त्वा तत्रैवान्तर्दधुः सुराः ॥ मार्कण्डेयोऽपि भगवान्यथाकामं जगाम ह ॥ ३०॥ सूत उवाच ॥ प्रजाः सिसृक्षन्ब्रह्मा तु सृष्टवान्धर्ममुत्तमम् ॥ चतुष्पादयुतं दान्तं लोकरक्षणहेतवे ॥३१॥ स चाह धर्मं रक्ष त्वं सर्वा वै मामकाः प्रजाः ॥ तच्छ्रुत्वा ब्रह्मणो वाक्यं तथास्त्विति ततोऽब्रवीत् ॥३२॥ दधार धर्मो भगवान्प्रजाः सर्वास्तदा नृप ॥ धर्मोऽपि भगवान्देवः स्वां योनिं समचिन्तयत् ॥३३॥ ज्ञात्वा सूर्यं विशेषाच्च वायुभूतः सनातनः ॥ तस्मिन्काले स भगवान् विवस्वान् लोकपावनः ॥३४॥ तपस्तेपे स गोकर्णे लिङ्गं संस्थाप्य शाम्भवम् ॥ ततः शिवः प्रसन्नात्मा सूर्यं प्राह कृपानिधिः ॥३५॥ सिद्धिर्भवतु ते सूर्य मत्प्रसादादसंशयम् ॥ लिङ्गमेतत्पूजकानां सर्वसिद्धिकरं भवेत् ॥३६॥ इति तस्मै वरं दत्त्वा तल्लिङ्गेऽन्तरधात्प्रभुः ॥ अन्तर्हिते भगवति सूर्यः स्वस्त्रियमाप्तवान् ॥३७॥ संज्ञया सह संगम्य तस्यां धर्ममजीजनत् ॥ उत्पाद्य धर्मं सूर्यश्च यथास्थानमगात्प्रभुः ॥३८॥ धर्मोऽपि तत्रभगवान् सूर्याश्रमसमीपतः ॥ कृत्वाश्रमपदं राजँस्तपस्तेपे सुदुश्चरम् ॥३९॥ तस्य तुष्टास्तदा देवा ब्रह्मविष्णुमहेश्वराः ॥देवा ऊचुः॥ वरं वरय भद्रं ते यत्ते मनसि वर्तते ॥४०॥ इत्युक्तः प्राह धर्मोऽपि ब्रह्मविष्णुमहेश्वरान् ॥ धर्म उवाच ॥ यदि प्रसन्ना यूयं मे लोकपालाश्च सा-

दरम् ॥ ४१ ॥ तीर्थमेतत्सुरश्रेष्ठा ह्याश्रमो लिङ्गमेत्र च ॥ लोके श्रेष्ठतमं भूयात्सर्वपापप्रणाशनम् ॥
४२॥ तथेत्युक्त्वा ततो देवास्तत्रैवान्तर्दधुः सुराः ॥ सूत उवाच ॥ शिवादनुज्ञां संप्राप्य षण्मुखो भ
रतर्षभ ॥४३॥ गोकर्ण क्षेत्रमासाद्य कुमारेश्वरमभ्यगात् ॥ त्रयोदशकुमारा वै तस्मिन्सिद्धिमुपागताः
॥४४॥ तीर्थे गुहोदके स्नात्वा षण्मुखो लिङ्गमर्चयन् ॥ तपस्तेपे निराहारश्शिवध्यानपरायणः ॥४५॥
कार्तिके कृत्तिकायुक्तपौर्णमास्यां नृपोत्तम ॥ तस्मिल्लिङ्गे ह्याविरभूत्पार्वत्या सहितः शिवः ॥ ४६ ॥
ब्रह्मविष्ण्वादिभिः सार्धमिदमूचे नृपोत्तम ॥ शंकर उवाच ॥ वरं वरय पुत्र त्वं यत्तेऽभिलषितं हृदि
॥४७॥ षण्मुख उवाच ॥ सिद्धिमिच्छामि भगवन् तीर्थं लिङ्गं मया श्रितम् ॥ बहुपुण्यप्रदं चास्तु त्व-
त्प्रसादान्महेश्वर ॥४८॥ शिव उवाच ॥ सिद्धोऽसि पूर्वमेव त्वं देवसेनापतिर्भव ॥ तारकासुरनाशाय
सेनानी त्वद्दते न हि ॥४९॥ शक्तिं चापि ददौ तस्मै सर्वशत्रुनिषूदिनीम् ॥ इति तस्मै वरं दत्वा तत्रै
वान्तर्दधे शिवः ॥५०॥ सूत उवाच ॥ तीर्थे गुहोदके स्नात्वा कुमारेश्वरमर्चयेत् ॥ त्रिःसप्तकुलजैः
सार्धं शिवलोके महीयते ॥५१॥ पुरा हि दारुणो नाम पार्थिवो वङ्गदेशजः ॥ प्रजाः पालयतस्तस्य
बभूवुः शत्रवो नृप ॥५२॥ रुध्वा पुरीं तेन गुप्तां सप्ताङ्गं जह्रुरोजसा ॥ ततस्तु दारुणो नाम एकाकी

वनमाश्रितः ॥ बहुधा क्षुत्तृषाविष्टो न्यग्रोधतलमाश्रितः ॥५२॥ उपस्पृश्य जलं तत्र भार्यया समुपा
विशत् ॥ संचिन्तयन्स बहुधा तस्मिन्काले समाहितः ॥५३॥ सनको नाम योगीन्द्रस्त्रैलोक्याटनत-
त्परः ॥ तमागतमभिप्रेक्ष्य तत्पदौ प्रणिपत्य च ॥५४॥ उवाच साञ्जलिर्भूत्वा सनकं योगिनं तदा ॥
योगिन्प्रशासतः पृथ्वीं धर्मेण सकलाः प्रजाः ॥५५॥ शत्रवश्च बलात्कृत्य सप्ताङ्गं जहुरोजसा ॥ मम
राज्यं यथा प्राप्स्ये तथा कुरु महामते ॥५६॥ सनक उवाच ॥ सर्वसिद्धिप्रदं क्षेत्रं गच्छ गोकर्णमुत्त
मम् ॥ कुमारेश्वरसंज्ञं तु लिङ्गं तत्रास्तिसिद्धिदम् ॥५७॥ त्वं तत्र गत्वा राजेन्द्र स्नात्वा तीर्थे गुहोद
के ॥ कुमारेशं समभ्यर्च्य तपस्तीव्रं समाचर ॥५७॥ ततः प्रसन्नो भवति पार्वत्या सहितः शिवः ॥
तवाभीष्टं ददात्येव स्वं राज्यं प्राप्स्यसे पुनः ॥५८॥ इति तद्भाषितं श्रुत्वा प्रणिपत्य महामुनिम् ॥
गोकर्णं क्षेत्रमासाद्य कुमारेश्वरमभ्यगात् ॥५९॥ स्नात्वा गुहोदके तीर्थे कुमारेशमपूजयत् ॥ आविर्बभू
व पुरतस्तस्माल्लिङ्गादुमापतिः ॥६०॥ राजानं प्राह राजेन्द्र वाक्यमेतन्महेश्वरः ॥ शिव उवाच ॥ त
वाभीष्टं प्रदास्यामि राजन्ब्रूहि मनोगतम् ॥६१॥ दारुण उवाच ॥ शत्रुभिर्हृतराज्योऽहं प्राप्स्ये राज्यं
स्वकं यथा ॥ तथा कुरु महादेव त्वयि भक्तिर्भवेन्मम ॥६२॥ शङ्कर उवाच ॥ तथाऽस्तु नृपशार्दूल

त्वं राज्यं प्राप्स्यसेऽचिरात् ॥ इदं शक्त्यायुधं दृष्ट्वा शत्रवस्तव भूपते ॥६३॥ पलायन्ते दशदिशः इ त्युक्त्वान्तर्दधे हरः ॥ राजा तु दारुणो नाम भार्यया सह पार्थिव ॥६४॥ वरं लब्ध्वा महेशात्तु शत्रू न् जित्वा स्वकां पुरीम् ॥ संप्राप्य सकलां पृथ्वीं पालयामास पूर्ववत् ॥६५॥ सूत उवाच ॥ ब्रह्मा जगत्पतिः पूर्वं स्रष्टुकामः प्रजा नृप ॥ ध्यायतस्तस्य देवस्य जिह्वाग्रादगलद्रसः ॥६६॥ गृहीत्वा त द्रसं ब्रह्मा पातुकामो दधार च ॥ न शशाक दृढीकर्तुं वक्त्राकाशं व्यदारयत् ॥६७॥ तस्मान्मुखाद्ध भूवाशु शुद्धवर्णा सरस्वती ॥ तां दृष्ट्वा चकमे देवः प्रोवाचेदं चतुर्मुखः ॥६८॥ सरसाद्रसनादेवं जा तासि मम मानदे ॥ सरस्वतीति ते नाम लोके ख्यातिं गमिष्यति ॥६९॥ द्विधा त्वं भव कल्याणि ह्येकांशेन नदी भव ॥ दिव्यस्त्रीरूपिणी भूत्वा भज मामेव भामिनि ॥७०॥ व्यक्ताव्यक्तस्वरूपेण भू तेषु वस सर्वदा ॥ इत्युक्ता सा तथेत्युक्त्वा त्यक्त्वा देहं वरानना ॥७१॥ दक्षस्य दुहिता भूत्वा गो कर्णे व्यचरत्तपः ॥ तीर्थं सुनिर्मलं कृत्वा लिङ्गं संस्थाप्य शाम्भवम् ॥ ७२ ॥ तस्यास्तपःप्रभावेण ब्र- ह्मा प्रत्यक्षतां गतः ॥ ब्रह्मोवाच ॥ दातास्मि ते वरं भद्रे किमिच्छसि शुभे वद ॥७३॥ सिद्धाहं स र्वभूतेषु चरिष्ये शाश्वतीः समाः ॥ तीर्थे स्नात्वा मदीये तु मल्लिङ्गं पूजयेच्च यः ॥ ७४ ॥ वाक्पटुत्वं

स लभतु त्वत्प्रसादात्सुरेश्वर ॥ सिद्धासि पूर्वमेव त्वं जिह्वायां वस सर्वदा ॥७५॥ सरस्वतीकुण्डमिति लोके ख्यातिं गमिष्यति ॥ इति दत्वा वरं ब्रह्मा तत्रैवान्तर्दधे नृप ॥७६॥ सरस्वती च ब्रह्माणमुपतस्थे समाहिता ॥७७॥ ॥ इति श्रीस्कान्दे ० श्रीगोकर्णमाहात्म्ये षष्ठोऽध्यायः ॥६॥

सृष्ट्यर्थं धातृवक्त्रेभ्यो जज्ञिरे भारते तदा ॥ वेदाश्चतुर्भ्यश्चत्वारः सरहस्याः सशाखकाः ॥१॥ एकीभूताः पुनस्तान्वै लोलयामास पद्मभूः ॥ वेदराशौ मथ्यमाने गायत्री समजायत ॥२॥ वेदेषु सारभूतत्वात्सावित्रीत्यपि कथ्यते ॥ गायन्तं त्रायते यस्माद्गायत्री चेति तां विदुः ॥३॥ उवाच पद्मभूर्देवीं गोकर्णे तप आचर ॥ मन्नियोगकरी पश्चान्मद्वशे तिष्ठ भामिनि ॥४॥ एवं करिष्ये देवेशेत्युक्त्वा सान्तरधीयत ॥ तेनैव हेतुना ब्रह्मा सावित्रीमशपद्रुषा ॥५॥ शरीरं नाशमायातु तव शीघ्रं वरानने॥ त्यक्त्वा शरीरं सा देवी वायुभूता चचार ह ॥६॥ ततो गोकर्णमासाद्य चचार तप उत्तमम् ॥ तीर्थं कृत्वा सुविमलं ब्रह्मा प्रत्यक्षतां गतः ॥७॥ गायत्रीं चापि सावित्रीं वरं ब्रूहीत्युवाच ह ॥ गायत्र्युवाच ॥ सिद्धिमिच्छामि भगवन् तीर्थं श्रेष्ठतमं भवेत् ॥८॥ ब्रह्मोवाच ॥ सिद्धिर्भवतु ते भद्रे तीर्थे ये स्नान्ति भामिनि ॥ तेषां त्रिजन्मचरितं पापं नश्यत्यसंशयम् ॥९॥ सावित्र्युवाच ॥ शरीरं प्रार्थये

देव त्वत्प्रसादाज्जगद्गुरो ॥ इति तस्य वचः श्रुत्वा ब्रह्मा दत्वा शुभं वपुः ॥१०॥ गायत्र्या चैव सा
वित्र्या सहितः स्वपदं ययौ ॥ सूत उवाच ॥ मात्रा शप्ताः पुरा नागा उच्चैश्श्रवसकारणात् ॥११॥
गोकर्णं क्षेत्रमासाद्य तपश्चक्रुः समाहिताः ॥ तीर्थं सुनिर्मलं कृत्वा लिङ्गं संस्थाप्य शाम्भवम् ॥१२॥
एवं तपस्यतां तेषां ब्रह्मा प्रत्यक्षतां गतः ॥ ब्रह्मोवाच ॥ नागा वृणीध्वं दास्यामि युष्माकं यदभी
प्सितम् ॥१३॥ नागा ऊचुः ॥ मात्रा शप्ता वयं ब्रह्मंस्तन्मोक्षं नो प्रसादय ॥ इति तेषां वचः श्रु-
त्वा ब्रह्मा नागानुवाच ह ॥१४॥ मातृशापो न भविता मत्प्रसादान्नसंशयः ॥ तीर्थमेतन्महाभागा
लिङ्गं युष्माभिरर्चितम् ॥१५॥ सर्वसिद्धिकरं चास्तु पितृशापविमोक्षदम् ॥ सूत उवाच ॥ इति तेषां
वरं दत्वा ब्रह्मा चान्तरधीयत ॥१६॥ श्रावणे मासि शुक्के तु पञ्चम्यां नागतीर्थके ॥ स्नात्वा तु वि
धिना देवं सर्पसूक्तेन चार्चयेत् ॥१७॥मातृशापो न भविता सर्पशापो विनश्यति ॥ उभयोः पक्षयो
श्चैव पञ्चम्यां नागतीर्थके ॥१८॥ स्नानं विधाय तल्लिङ्गं नागसूक्तेन चार्चयेत् ॥ पुरा तु भार्गवो रा
मो हत्वा क्षत्रियसन्ततिम् ॥१९॥ कश्यपं मुनिशार्दूलं यज्ञार्थं च समाह्वयत् ॥ यज्ञं कृत्वा तदा राम
स्तस्मै प्रादाद्वसुन्धरां ॥२०॥ तां भूमिं कश्यपो राजन् ब्राह्मणेभ्यः प्रदत्तवान् ॥ अराजका तदा चा

सीत्सर्वा भूमिर्महीपते ॥२१॥ बभूवातितरां लोके ह्यधर्मो लोकनाशकः ॥ ततो भूमिरधर्मं तं सोढुं
न क्षमतेऽनघ ॥२२॥ ततो गोकर्णमासाद्य शतशृङ्गस्य मूर्धनि ॥ अधोभागं प्रविश्याशु तपस्तेप्रमत
प्यत ॥२३॥ भूमिश्च काश्यपी चक्रे दिव्यवर्षसहस्रकम् ॥ ततस्तुष्टो महादेवो वरं ब्रूहीत्यभाषत ॥२४॥
भूमिरुवाच ॥ अराजकमिदं विश्वं यथापूर्वं कुरु प्रभो ॥२५॥ शङ्कर उवाच ॥ राजन्वती भव शुभे
काश्यपीति प्रथा भवेत् ॥ इदं तत्र तपस्थानं गोगर्भमिति विश्रुतम् ॥२६॥ अत्र प्रविशतां नृणां न
भवेद्गर्भसंस्थितिः ॥ इति दत्वा वरं भूम्यै शङ्करोऽन्तरधीयत ॥२७॥ भूमिस्तं प्राप्य सा देवी यथापू
र्वमतिष्ठत ॥ सूत उवाच ॥ ब्रह्मणो मानसःपुत्रो वसिष्ठो मुनिपुङ्गवः ॥२८॥ हिमवत्पर्वते रम्ये तपः
कुर्वन्नुवास ह ॥ इक्ष्वाकुर्नाम नृपतिर्वरयामास तं गुरुं ॥२९॥ शुश्रूषया स्ववंशस्य तथास्त्वित्यवदन्मुनिः॥
तदन्वये ह्यभूद्भूपो निमिः परमधार्मिकः ॥३०॥ कदाचिन्मृगयां कृत्वा गृहे सुप्तो महीपतिः॥ तदा
वसिष्ठो ह्यगमत्तद्गृहद्वारदेशतः ॥३१॥ सुप्तं द्वाःस्थमुखाच्छ्रुत्वा ददौ शापं नृपाय सः ॥ शरीरं ते वि
नश्येत राजन्मदवमानतः ॥३२॥ इति शप्त्वा ययौ सोऽपि स्वाश्रमं प्रति भूपते ॥ ततः प्रबुद्धो रा
जापि श्रुत्वा शापं गुरोस्तदा ॥३३॥ स्वगुरुं शप्तवान्सोऽपि राजा परमधार्मिकः ॥ अनागसं मां वि-

ग्रेन्द्र यस्मात्त्वं शप्तवानसि ॥३४॥ तस्मात्तवापि देहस्तु नश्यत्येव न संशयः ॥ सूत उवाच ॥ ब्रह्म लोकं गतौ राजन्नुभौ तौ वायुरुपिणौ ॥३५॥ चिन्तयामास तौ दृष्ट्वा ब्रह्मा मुनिमुवाच ह ॥ मुने त्वं गच्छ गोकर्णे तपोवनमनुत्तमम् ॥३६॥ मित्रावरुणनामानौ मुनी तत्र तपस्यतः ॥ तत्र गत्वा तु रुव-णाच्छरीरं पुनराप्नुहि ॥३७॥ ततो निमिमुवाचेदं किमिच्छसि नृपाधुना ॥ निमिरुवाच ॥ शरीरं नाशसहितं नेच्छामि सुरसत्तम ॥३८॥ चक्षुषोः सर्वमर्त्यानां वसामि त्वत्प्रसादतः ॥ तथेति ब्रह्मणा प्रोक्तः सोऽवसच्चक्षुषोर्नृणां ॥३९॥ तदारभ्य नराः सर्वे सनिमेषा नृपाभवन् ॥ ततो वसिष्ठः संप्राप्य शरीरं वरुणान्नृप ॥४०॥ तपश्चकार सुचिरं गोकर्णे तु तपोवने ॥ लिङ्गं तत्र प्रतिष्ठाप्य तीर्थं कृत्वा सुनिर्मलम् ॥४१॥ ततो महेश्वरात्प्राप्य योगसिद्धिं तदा मुनिः ॥ इच्छावासं भूतले च यथाकामं जगाम ह ॥४२॥ सूत उवाच ॥ ब्रह्मणो मानसः पुत्रः कुशिको नाम पार्थिवः ॥ कुशनाभिस्तस्य सुतो गाधिस्तस्य ह्यभूत्सुतः ॥४३॥ सोऽपि दुर्वाससस्तुष्टात्कन्यारत्नं च लब्धवान् ॥ भृगुपुत्रो ऋचीकस्तु ह्युपयेमे च कन्यकाम् ॥४४॥ ततो भृगुस्तन्निशम्य ययौ पुत्रनिकेतनम् ॥ सपत्नीकं सुतं दृष्ट्वा उवाच स्वस्नुषां मुनिः ॥४५॥ पुत्रस्ते भविता भद्रे मातुस्तेऽपि न संशयः ॥ आलिङ्गतं पृथग्वृक्षं साश्वत्थं त्वमुदु

म्बरम् ॥४६॥ इत्युक्त्वा स यथाकामं जगाम स्वाश्रमं प्रति ॥ अथैतदन्यथा ते तु चक्राते वरयोषि
तौ ॥४७॥ ततो गर्भः समभवत्तयोरपि नृपोत्तम ॥ ततो भृगुरगाद्भूयः स्नुषामेवमुवाच च ॥४८॥
आलिङ्गनेऽन्यथा भद्रे युवाभ्यां हि कृतं ह्यभूत् ॥ तस्मात्तव सुतो भद्रे क्षत्राचारो भविष्यति ॥४९॥
क्षत्रियोऽपि तव भ्राता तपसा ब्राह्मणो भवेत् ॥ सत्यवत्युवाच ॥ पुत्रो मे मुनिशार्दूल ब्राह्मणाचारवा
न्भवेत् ॥५०॥ भृगुरुवाच ॥ तथास्तु भद्रे पौत्रस्ते क्षत्राचारो भवेद्ध्रुवम् ॥ इत्युक्त्वा प्रययौ सोऽ-
पि यथाकामं स्वमाश्रमम् ॥५१॥ ततो गाधेः सुतो जातो विश्वामित्रः प्रतापवान् ॥ धर्मेण पालया
मास मेदिनीं स नृपोत्तमः ॥५२॥ कदाचिन्मृगयासक्तो हिमवत्काननं ययौ ॥ नानाविधान्मृगान्ह
त्वा वसिष्ठस्याश्रमं ययौ ॥५३॥ सुश्रान्तं नृपतिं ज्ञात्वा वसिष्ठो वाक्यमब्रवीत् ॥ स्थीयतामत्र नृपते
भोजयिष्याम्यहं क्षणात् ॥५४॥ इत्युक्त्वाहूय सुरभिं नन्दिनीमिदमब्रवीत् ॥ सबलस्य नृपस्यास्य देहि
भोजनमुत्तमम् ॥५५॥ तथेत्युक्त्वा च सा देवी विचित्राणि गृहाणि च ॥ हस्तिशालादीनि तथा चान्नं
बहुविधं नृप ॥५६॥ पानानि वस्त्राभरणं दुदोह सुरभिः क्षणात् ॥ ततस्तु सबलो राजा स्नात्वा पी
त्वा मुमोद ह ॥५७॥ भुक्त्वोवास सुखं राजा स्वर्गे सुकृतिनो यथा ॥ व्यपनीय निशां तां तु वसिष्ठं

वाक्यमब्रवीत् ॥५८॥ कामधेनुरियं राज्ञो मम योग्या मुनीश्वर ॥ अयुतेन गवांतस्मादिमां मे दातु-मर्हसि ॥५९॥ वसिष्ठ उवाच ॥ न देया गौर्नृपश्रेष्ठ होमधेनुरियं मम ॥ इत्युक्तस्तेन राजा स कोपा दाह मुनीश्वरम् ॥६०॥ नेष्यामि गां बलाद्विप्र रत्नार्हः क्षत्रियोऽस्म्यहम् ॥ इत्युक्त्वा कौशिकः क्रो-र्याद्गृहीत्वा तां पयस्विनीम् ॥६१॥ ययौ स्वनगरीं गन्तुं धेनुराह मुनिं तदा ॥ उपेक्षसे किमर्थं मां दुष्टैरेभिः प्रकर्षिताम् ॥६२॥ वसिष्ठ उवाच ॥ क्षमाधना वयं क्रूरैर्बलात्त्वं नीयसे शुभे ॥ इत्युक्ता सा तु मुनिना कोपादाकाशगाभवत् ॥६३॥ योधान्ससर्ज विविधान्नानाप्रहरणोद्यतान् ॥ क्षणात्ते नाशया मासुर्विश्वामित्रस्य वाहिनीम् ॥६४॥ निर्जितः कौशिकस्त्वीर्ष्याद्रुद्रमाराध्य यत्नतः ॥ लब्ध्वा तस्मा-द्रुद्रदण्डं वसिष्ठं पुनरभ्यगात् ॥६५॥ जग्रास रुद्रदण्डं तं वसिष्ठो मुनिपुङ्गवः ॥ निर्भिद्य मुनिदेहं स रुद्रदण्डस्त्वगाच्छिवम् ॥६६॥ ररक्ष तं मुनिं ब्रह्मा विश्वामित्रोऽपि पार्थिव ॥ ब्राह्मं बलं बलं मत्वा धिक्कृत्वा क्षत्रियं बलम् ॥६७॥ गोकर्णं क्षेत्रमासाद्य शतशृङ्गस्य मूर्धनि ॥ लिङ्गं तत्र प्रतिष्ठाप्य तीर्थं कृ त्वा ह्यधस्ततः ॥६८॥ तपश्चकार सुचिरं वर्षाणामयुतं प्रभुः ॥ आविर्बभूव तल्लिङ्गाद्ब्रह्मविष्णुमहेश्वराः ॥६९॥ विश्वामित्रं तदा वाक्यमब्रुवंस्ते नरोत्तम ॥ वरं वरय भद्रं ते प्रसन्नाः स्मो वयं मुने ॥७०॥

विश्वामित्र उवाच ॥ यदि प्रसन्ना यूयं मे ब्राह्मण्यं प्रार्थयाम्यहम् ॥ तीर्थं लिङ्गं सुरश्रेष्ठास्त्रैलोक्येचोत्तमं भवेत् ॥७१॥ इति तस्य वचः श्रुत्वा ब्रह्मविष्णुमहेश्वराः ॥ ब्राह्मण्यं च ददुस्तस्मै ब्रह्मदण्डं च पूज्यताम् ॥७२॥ तस्य लिङ्गस्याश्रमस्य श्रेष्ठत्वञ्चापि पार्थिव ॥ इति दत्वा वरं तस्मै तत्रैवान्तर्दधुः सुराः ॥७३॥ विश्वामित्रोऽपि ब्राह्मण्यं गोकर्णे प्राप्य पार्थिव ॥ लोके श्रेष्ठतमो भूत्वा चचार स महामुनिः ॥७४॥ तस्य तीर्थे नरः स्नात्वा तल्लिङ्गं परिपूज्य च ॥ जपेद्यो ब्राह्मणो लोके गायत्रीं लक्षसङ्ख्यया ॥७५॥ सप्तजन्म भवेद्विप्रो वेदवेदाङ्गपारगः ॥ सूत उवाच ॥ सुमित्रो नाम विप्रेन्द्रः पौलस्त्यकुलसंभवः ॥७६॥ गोकर्णे क्षेत्रमासाद्य लिङ्गं संस्थाप्य शाम्भवम् ॥ तपसा महता तत्र तोषयामास शङ्करम् ॥७७॥ शिवः सान्निध्यमकरोत्तस्मिंल्लिङ्गे शिवान्वितः ॥ तज्ज्ञात्वा मुनयः सर्वे ह्यानेतुं जाह्नवीं नृप ॥७८॥ परस्परं समालोच्य कोटितीर्थाग्निदिक्तटे ॥ विघ्नेश्वरं पूजयित्वा सुमित्रं मुनिमागमन् ॥७९॥ मुनय ऊचुः ॥ सिद्धोऽसि तपसा ब्रह्मञ्छिवसान्निध्यकारणात् ॥ अस्मन्मनोरथमिमं कर्तुमर्हसि सुव्रत ॥८०॥ गङ्गां त्रिपथगां विप्र पातालतलवासिनीं ॥ सर्वलोकहितार्थाय तपसोद्धर्तुमर्हसि ॥८१॥ इति तेषां वचः श्रुत्वा मुनिः सम्पूज्य शाम्भवम् ॥ प्रत्यक्षीकृत्य स शिवमिदमूचे म

हेश्वरम् ॥८२॥ देहि गङ्गां महादेवीं हितार्थं जगतोऽस्य वै ॥ इति तस्य वचः श्रुत्वा गङ्गां सस्मार शङ्करः॥८३॥ तत्तस्य चिन्तितं ज्ञात्वा गङ्गायाता नृपोत्तम ॥ शतशृङ्गगिरेर्मूर्ध्नि ह्रादिनी पर्यवर्तत ॥८४॥ गङ्गाधारेति तामाहुर्मुनयस्तत्वदर्शिनः ॥ दृश्यादृश्येव सा देवी प्लावयामास गोश्रुतिम् ॥८५॥ सप्तजन्मकृतं पापं तत्र स्नानाद्विनश्यति ॥ ८६ ॥ ॥ इति श्रीस्कान्दे महापुराणे गोकर्णखण्डे गोकर्णमाहात्म्ये सारोद्धारे सप्तमोऽध्यायः ॥७॥ ॥छ॥ ॥छ॥ ॥छ॥

पुरा खरासुरो गत्वा शतशृङ्गं महागिरिम् ॥ क्रीडावनगतां तत्र पार्वतीं स ददर्श ह ॥१॥ प्राप्तु कामस्तु तां पापस्तपो घोरमतप्यत ॥ ततस्तुष्टं महेशानमुवाचासुरपुङ्गवः ॥२॥ खर उवाच ॥ यस्य मूर्ध्नि क्षिपे हस्तं भस्मसात्स भवेद्विभो ॥ तथास्त्विति शिवेनोक्तो हस्तं तस्यैव मूर्धनि ॥३॥ निक्षेप्तुमुद्यतो दुष्टः शिवस्तस्मादधावत ॥ विष्णुमेत्याह तद्वृत्तं विष्णुर्मायां प्रसृष्टवान् ॥४॥ एकांशेनानुगः शम्भोरैन्द्रीं दिशमधावत ॥ परेणांशेन धृतवांस्त्रीरूपां मोहिनीं तनुम् ॥५॥ दृष्ट्वा तां चकमे दैत्यस्तदा विस्मृत्य पार्वतीम् ॥ उवाच सुभगे कासि कस्यासि वरवर्णिनि ॥६॥ हिरण्यकशिपोर्वंशे जातोऽहं लोकविश्रुतः ॥ तपसा शिवमाराध्य वरं लब्ध्वान्यदुर्लभम् ॥७॥ यन्मूर्ध्नि निक्षिपे हस्तं स भवेद्भस्मसात्ध्रुवम् ॥

शिवं हत्वा तु तां गौरीं रमेयमिति मे मतिः ॥८॥ परं मदनुरूपा त्वं तव चाहमनिन्दिते ॥ एहि
सार्धं मया सुभ्रूः सुचिरं रमयस्व मां ॥९॥ मोहिन्युवाच ॥ विवाहो वा विवादो वा प्रशस्तस्तुल्य
योः किल ॥ बली लब्धवरश्च त्वमेषालब्धवराबला ॥१०॥ अतो मे तद्वरं दत्वा लभस्वौपयमं सुखम् ॥
तथेत्युक्त्वा खरस्तस्यै ईशाल्लब्धवरं ददौ ॥११॥ कामान्धस्तां चोपसृत्य परिरम्भोद्यतोऽभवत् ॥ ता
वत्सा वामहस्तेन तस्य कण्ठे निपीड्य च ॥१२॥ मूर्ध्नि दक्षकरं न्यस्याशपद्भस्मीभवेति तम् ॥ खरासु
रः सद्य एव भस्मशेषो बभूव ह ॥१३॥ ततो देवाः पुष्पवृष्टिं ववृषुस्तत्र पार्थिव ॥ सूत उवाच ॥
उपसंहृत्य भगवान् स्त्रीरूपं गरुडध्वजः ॥१४॥ उवाच शङ्करं विष्णुस्तव शत्रुर्हतो मया ॥ इत्युक्तो
विष्णुना सार्धं वैतरण्याः समुत्थितः ॥१५॥ यस्माद्देशादुपाक्रामत्तदुन्मज्जनमुच्यते ॥ तीर्थानामुत्तमं
तीर्थं नदी वैतरणीति सा ॥१६॥ उन्मज्जनपुरोभागे सर्वतीर्थसमन्विता ॥ दृश्यादृश्या नदी भूत्वा
कोटितीर्थं समाविशत् ॥१७॥ संभूय ताम्रगौर्या सा समुद्रं प्रविवेश ह ॥ वैतरण्यां नरः स्नात्वा स
र्वपापैः प्रमुच्यते ॥१८॥ उन्मज्जने नरः स्नातो राजते खे यथोडुराट् ॥ तस्मिन्सिद्धः पुरा नाग
एलापत्रो महाबलः ॥१९॥ एलावनमिति ख्यातमभितोन्मज्जनान्नृप ॥ ततो हरिहरौ यातौ नारायण

पुरं शुभम् ॥२०॥ उवाच शङ्करः शौरिं स्त्रीरूपं तत्प्रदर्शय ॥ दर्शयित्वा तु तद्रूपं शङ्कराय तदा हरिः ॥२१॥ आचष्ट सर्ववृत्तान्तं खरासुरवधे कृतम् ॥ दृष्ट्वातिसुन्दरं रूपं शङ्करो विस्मितोऽभवत् ॥२२॥ शङ्कर उवाच ॥ रूपेणानेन तिष्ठात्र मया सह जनार्दन ॥ इत्युक्त्वालिङ्ग्य तां देवो नरनारीश्वरोऽभवत् ॥२३॥ तस्मिन्नेव पुरे देवावेकमूर्तिधरौ स्मृतौ ॥ पुरं हरिहरं नाम गोकर्णे सुरपूजितम् ॥२४॥ तस्मिन्दानानि दत्तानि देवभोग्यानि सत्तम ॥ त्रिस्सप्तकुलजैः सार्धं दाता स्वर्गमवाप्नुयात् ॥२५॥ पुरे हरिहरे चास्ति मण्डपत्रितयं नृप ॥ वैराग्यदं ज्ञानदं च मुक्तिदं च नृपोत्तम ॥२६॥ उत्तरस्यां स्थितं यत्तु वैराग्यं मण्डपं स्मृतम् ॥ तत्र मासमुषित्वा तु गायत्रीजपमाचरेत् ॥२७॥ देवयोः पुरतो यत्तु मण्डपं ज्ञानदं विदुः ॥ अष्टाक्षरं जपेन्मन्त्रं तत्र मासं नृपोत्तम ॥२८॥ स ज्ञानं सुलभं लब्ध्वा विष्णुसायुज्यमाप्नुयात् ॥ तत्र नैर्ऋत्यदिग्भागे स्थितं वै मुक्तिमण्डपम् ॥२९॥ तस्मिन्मृताश्च ये केचित्पापात्मानोऽपि मानवाः ॥ सर्वपापविनिर्मुक्ताः प्राप्नुवन्ति परां गतिम् ॥३०॥ प्रयाणसमये यस्तु तत्र शेते हरिं स्मरन् ॥ नामसंकीर्तनं कुर्वन्त्समीपं पुरुषोत्तमः ॥३१॥ आगत्य दयया तस्य स्वकरं मूर्ध्नि निक्षिपन् ॥ ब्रह्मोपदेशं कुरुते स ब्रह्मा जायते ध्रुवम् ॥३२॥ सूत उवाच ॥ धर्मराजस्य दुहिता

नदी वैतरणी नृप ॥ स्वभर्तुर्वरुणस्यैषा संकेतं न ययौ यतः ॥३३॥ ततः शशाप तां भर्ता शोणितो
दा नदी भव ॥ ततः प्रसादयामास भर्तारं सा शुचिस्मिता ॥३४॥ ततः प्रसन्नस्तामाह भर्ता हरि-
हरौ शुभे ॥ यदा पाताललोकस्थौ तदा याहि रसातलम् ॥३५॥ दृष्ट्वा हरिहरौ तत्र तपश्चर सुदुश्चर
म् ॥ ततस्तयोः प्रसादेन शापमोक्षो भवेद्ध्रुवम् ॥३६॥ इत्युक्ता पतिना सा तु रुधिरोदा नदी बभू
त् ॥ ततः पातालमागत्य दृष्ट्वा हरिहरौ नृप ॥३७॥ तपसातोष्य तौ देवौ शापान्मुक्ता बभूव सा॥
वैतरण्या समं देवौ पातालादूर्ध्वमागतौ ॥३८॥ भर्तृशापाद्विमुक्ता सा पत्या च सह संस्थिता ॥ त
स्यां स्नातः सर्वतीर्थे स्नातो भवति मानवः ॥३९॥ तस्मादुन्मज्जनीतीर्थादाग्नेय्यां दिशि पार्थिव ॥
दुर्गादेवी यशोदायां प्रादुर्भूतान्तरिक्षगा ॥४०॥ गोकर्णं क्षेत्रमासाद्य वैतरण्याः समीपतः ॥ तीर्थं
सुनिर्मलं कृत्वा तपः कृत्वा सुनिश्चला ॥४१॥ विष्णुवाक्यात्ततो देवी विन्ध्याचलमगान्नृप ॥ एकां-
शेनावसत्तत्र शतश्रृङ्गतटे शुभे ॥४२॥ सूत उवाच ॥ पुरा पण्डुसुतो राजा धर्मपुत्रो युधिष्ठिरः ॥ भु
वं प्रदक्षिणीकुर्वन्गोकर्णं क्षेत्रमागमत् ॥४३॥ आदौ स्नात्वा कोटितीर्थे पूजयित्वा महाबलम् ॥ शत
श्रृङ्गतटे रम्ये तीर्थं कृत्वा सुनिर्मलम् ॥४४॥ वार्षिकांश्चतुरो मासानुषित्वा तत्र पाण्डवः ॥ ततो द्वै-

तवनं प्रायाद्भ्रातृभिः सह पार्थिव ॥४५॥ तदेतत्पाण्डवं तीर्थं यत्रोवास युधिष्ठिरः ॥ सूत उवाच ॥ रावणादीत्रणे हत्वा रामो राक्षसपुङ्गवान् ॥४६॥ कृताभिषेको राजेन्द्र अयोध्यामध्यतिष्ठत ॥ ततोऽगस्त्यमुखाच्छ्रुत्वा रावणं ब्रह्मवंशजम् ॥४७॥ ब्रह्महत्याभयाद्भीतो वसिष्ठोक्त्या ततोऽगमत् ॥ सीतालक्ष्मणसंयुक्तो तथा वायुसुतेन च ॥४८॥ गोकर्णं क्षेत्रमासाद्य तपः कृत्वा सुनिश्चलम् ॥ प्रत्यक्षीकृत्य गिरिशं हत्यापापाद्विमुक्तवान् ॥४९॥ क्षेत्रयात्रां ततः कृत्वा पूजयित्वा महाबलम् ॥ अयोध्यां स्वां पुरीं गत्वा यथापूर्वमतिष्ठत ॥५०॥ रामतीर्थे स्नानमात्राद्ब्रह्महत्या विनश्यति ॥ सूत उवाच ॥ पुरा कृतियुगे तात वैदर्भः पृथिवीपतिः ॥५१॥ भीमो नाम स्वतनये राज्यं न्यस्य वनं ययौ ॥ पत्न्या सह विरक्तः सन् शतशृङ्गं महागिरिम् ॥५२॥ तपस्तेपे निराहारो घोरमुद्दिश्य शङ्करम् ॥ प्रत्यक्षीकृत्य गिरिशं शाश्वतं स्वर्गमाप्तवान् ॥५३॥ तीर्थं तदेतन्नृपते सर्वपापहरं परम् ॥ भीमकुण्डमितिख्यातं सर्वलोकेषु विश्रुतम् ॥५४॥ सूत उवाच ॥ भृगुवंशोद्भवः पूर्वमौर्वो नाम महामुनिः ॥ क्रोधाविष्टस्तपस्तेपे दग्धुकामश्चराचरम् ॥५५॥ गोकर्णे शतशृङ्गे तु रुद्रमाराधयन् चिरम् ॥ प्रत्यक्षीकृत्य स शिवं त्रिलोकीदाहनो ह्यभूत् ॥५६॥ ज्वालामाली विवृद्धश्च दृष्ट्वा ब्रह्मा विभावसुम् ॥ देवैः समं प्रार्थयित्वा

विष्णुर्गोकर्णमागमत् ॥५७॥ चक्रेण वेष्टयामास तं वह्निं मधुसूदनः ॥ ऊर्ध्वं तु चन्द्रं संस्थाप्य और्वमाह जनार्दनः ॥५८॥ कोपः संह्रियतां विप्र संहारो नोचितोऽधुना ॥ अन्ते संहारकस्त्वं वै भव विप्र मदाज्ञया ॥५९॥ तीर्थमौर्वाख्यमिति तत्ख्यातं भवतु सर्वतः ॥ इत्युक्त्वा भगवान्विष्णुर्देवैः सार्धं तिरोदधे ॥६०॥ सूत उवाच ॥ मातृदास्यविमोक्षार्थं गरुडः पततां वरः ॥ जित्वा देवासुरान् युद्धे सुधामाहृतवान्पुरा ॥६१॥ गरुडेन नृपश्रेष्ठ निक्षिप्तं यत्र चामृतम् ॥ तत्राभवच्चान्द्रतीर्थं सर्वरोगविनाशकं ॥६२॥ तत्र चौषधजातानि जज्ञिरे त्रीणि पार्थिव ॥ सोममाली सुमाली च समाली चेति च त्रयम् ॥६३॥ महता तपसा लभ्यान्यलभ्यानि च पापिनाम् ॥ सूत उवाच ॥ चन्द्राय प्रददौ दक्षः सप्तविंशति कन्यकाः ॥६४॥ तासां मध्ये सुरूपैका चतुर्थी रोहिणी शुभा ॥ सर्वाः स्त्रियः परित्यज्य तामेव रमयत्ययम् ॥६५॥ ततो दक्षः प्रकुपितश्चाशपच्चन्द्रमञ्जसा ॥ क्षयरोगी भव त्वं हि स्त्रीणां भेदकरो यतः ॥६६॥ ततो क्षयाभिभूतस्तु चन्द्रमाः पितृवाक्यतः ॥ निर्वृतिं तपसान्विच्छन् गोकर्णं क्षेत्रमागमत् ॥६७॥ सोमतीर्थं समासाद्य तोषयामास शङ्करम् ॥ तदा शापाद्विमुक्तोऽभूत्सिद्धिं प्राप्य महेश्वरात् ॥६८॥ मूर्ध्नि स्थानमवापाग्र्यं शिवस्य द्विजराट् तदा ॥ सूत उवाच ॥ त्वष्टुः प्रजा-

पतेः कन्या भार्या सूर्यस्य चाभवत् ॥६९॥ साऽसहन्ती भर्तृतेजः पितृवेश्म जगाम ह ॥ तज्ज्ञात्वा सविता चापि त्वष्टुर्गेहमुपागमत् ॥७०॥ ततस्त्वष्टा सहामन्त्र्य त्रिदशैः सह पार्थिव ॥ तेजो विशातयामास यन्त्रमारोप्य तं शनैः ॥७१॥ यत्तदंशोऽपतद्राजन् शतशृङ्गतटे शुभे ॥ तत्संगृह्य शिवश्चक्रे रौद्रं चक्रं सुदर्शनम् ॥७२॥ तत्सूर्यतीर्थं विख्यातं यत्र कीर्णं महो रवेः ॥ तत्र स्नातः सर्वतीर्थे स्नातो भवति मानवः ॥७३॥ सूत उवाच ॥ नागराजोऽपि सिद्ध्यर्थं तपस्तेपेऽतिदारुणम् ॥ तस्य तत्तपसा राजन् शिवः प्रत्यक्षतां गतः ॥७४॥ शिव उवाच ॥ वरं वरय भद्रं ते नागराज ददामि ते ॥ अनन्त उवाच ॥ बले धैर्ये तथा धुर्ये न मत्तो ह्यधिको भवेत् ॥७५॥ ज्ञानं देहि महादेव तीर्थं श्रेष्ठं भवेदिदम् ॥ शिव उवाच ॥ तथास्त्विति शिवोऽप्युक्त्वा तत्रैवान्तरधीयत ॥७६॥ ततोऽनन्तः प्रविश्याब्धिं जलमार्गेण पार्थिव ॥ स्वस्थानमगमत्सोऽपि नागेन्द्रैः संस्तुतः स्वयम् ॥७७॥ ततोऽनन्तदृषद्राजन् पाषाणो लोकविश्रुतः ॥ शिलायां दृश्यते मार्गः समुद्रे च नराधिप ॥७८॥ शिलायां वर्तते तीर्थं नागराजस्य पार्थिव ॥ तस्मिन्स्नातः सर्वतीर्थे स्नातो भवति मानवः ॥७९॥ दृष्ट्वा तच्च शिलामार्गं सर्वपापक्षयो भवेत् ॥ सर्वदेवमयः साक्षाच्छिशुमारः प्रजापतिः ॥८०॥ तपस्तेपे निराहारः

सिद्धिमिच्छन्पुरा नृप ॥ घोरेण तपसा तस्य तुतोष भगवान् हरः ॥८१॥ प्रत्यक्षमगमत्तस्य वरं ब्रूहीति चाब्रवीत् ॥ शिंशुमार उवाच ॥ सिद्धिमिच्छामि भगवन् परां सिद्धिं प्रदेहि मे ॥८२॥ तीर्थं मन्नामकं भूयात्स्नाताः सिद्धा भवन्तु वै ॥ ईश्वर उवाच ॥ सिद्धिर्भवतु ते चात्र स्नाताः सिद्धा भवन्तु वै ॥८३॥ तीर्थमेतच्छिंशुमार त्वन्नाम्ना ख्यातिमेष्यति ॥ इत्युक्त्वा भगवाञ्छम्भुस्तत्रैवान्तरधीयत ॥८४॥ तत्तीर्थस्नानमात्रेण सर्वान्कामानवाप्नुयात् ॥ प्राणिनां क्षेत्रभूतं तद्गोकर्णं क्षेत्रमुत्तमम् ॥८५॥

इति श्रीस्कान्दे गोकर्णखण्डे श्रीगोकर्णमाहात्म्ये अष्टमोऽध्यायः ॥८॥ ॥छ॥ ॥छ॥

सूत उवाच ॥ सनत्कुमारो भगवान् गोकर्णात्क्रोशमात्रतः ॥ कृत्वाश्रमपदं तत्र तपस्तेपे सुदुश्चरं ॥१॥ ततस्तस्यापि भगवानाविरासीत्सदाशिवः ॥ सनत्कुमारं भगवाँस्तुष्टोऽसीत्याह तं नृप ॥२॥ सनत्कुमार उवाच ॥ लिङ्गमेतन्नराः स्पृष्ट्वा स्वर्गं गच्छन्त्यवारिताः ॥ योगेश्वराभिधानेन त्रैलोक्ये विश्रुतं भवेत् ॥३॥ तथास्त्विति हरेणोक्त्वा लिङ्गे तस्मिन्व्यलीयत ॥ सनत्कुमारो नृपते यथाकामं जगाम ह ॥४॥ तत्स्पृष्ट्वा सर्वभूतानि स्वर्गं गच्छन्त्यहर्निशम् ॥ महापातकयुक्ताश्च ह्युपपातकिनस्तथा ॥५॥ तिर्यग्योनिगताश्चापि सर्वेऽपि नृपसत्तम ॥ पूर्ण आसीन्नाकलोको नावकाशो ह्यभून्नृप ॥६॥ ततो ब्र-

ह्मा समागम्य देवैश्च ऋषिभिः सह ॥ प्रत्यक्षं कृत्य लक्ष्मीशमिदं वचनमब्रवीत् ॥७॥ सनत्कुमारेण विभो गोकर्णे स्थापितं शुभम् ॥ योगेश्वराभिधं लिङ्गं तत्स्पृष्ट्वा प्राणिनो ध्रुवम् ॥८॥ सशरीरा दिवं प्राप्तास्तैर्वयं बाधिता भृशम् ॥ तच्छ्रुत्वा भगवान्विष्णुश्चक्रं संगृह्य पाणिना ॥९॥ देवैर्ब्रह्मादिभिः साकमेत्य तल्लिङ्गमाच्छिनत् ॥ अधोभागः स्थितो भूमौ चक्रोपरि तथापरः ॥१०॥ भग्नमासीत्तदा चक्रं भारेण महता नृप ॥ ततस्तु विष्णुना सार्धं देवा गोकर्णसंस्थितम् ॥११॥ रुद्रमाराधयामासुः चक्रार्थं ते दिवौकसः ॥ शिवोऽवतारयामास पाताले तच्छिरो महत् ॥१२॥ ततस्तस्मात्पुनश्चक्रमुत्ततार द्विजोत्तम ॥ तच्चक्रतीर्थं विख्यातं सर्वपापप्रणाशनम् ॥१३॥ चक्रेण खण्डितत्वाच्च चक्रखण्डेश्वरो ह्यभूत् ॥ पूजयित्वा तु तल्लिङ्गं देहान्ते स्वर्गमाप्नुयात् ॥१४॥ सूत उवाच ॥ पुरा कृतयुगे राजन् ग्रहणे भास्करस्य च ॥ पुष्यमासे तदा लोकाः सर्वे गोकर्णमाययुः ॥१५॥ तां दृष्ट्वा समितिं गौरी खे स्थिता शङ्करं जगौ ॥ किमर्थं तु महादेव अत्रागच्छन्ति वै प्रजाः ॥१६॥ शिव उवाच ॥ अद्यापराह्णे ग्रहणं भविष्यति वरानने ॥ तदा संपूज्य मां भक्त्या सर्वे यान्ति त्रिविष्टपम् ॥१७॥ देव्युवाच ॥ सर्वे यदि दिवं यान्ति नावकाशो भवेद्दिवि ॥ ततः प्रहस्य भगवान् शङ्करस्तामुवाच ह ॥१८॥ शिव उवाच ॥

एषां मध्ये गमिष्यन्ति त्रयो निर्वाणमेत्र हि ॥ क्रियते यादृशं कर्म फलं भवति तादृशम् ॥१९॥ दर्शयिष्ये तव शिवे किञ्चिदत्र निदर्शनम् ॥ सूत उवाच ॥ ततः शिवो भवानी च धृत्वा गोरूपमञ्ज सा ॥२०॥ यात्रिकाणां दृष्टिपथे पङ्कमग्नौ स्थितौ नृप ॥ दृष्ट्वा दृष्ट्वा गताः सर्वे पुरुकुत्सो द्विजोत्तमः ॥२१॥ तद्गोयुग्मं समुद्धर्तुं प्रयत्नं कृतवान्बहु ॥ आत्रेयो नाम विप्रोऽपि तत्सहाय उपागमत् ॥२२॥ उभावपि न शक्तौ तौ सुहोत्रस्तत्र चागमत् ॥ ते च गोमिथुनं यत्नादुद्धृत्याथ सिषेविरे ॥२३॥ जलैर्बालतृणैरङ्गमर्दनैर्विविधैर्नृप ॥ ततस्तद्भक्तिसंतुष्टः प्रत्यक्षीभूय शङ्करः ॥२४॥ उद्दधार भवाम्बोधिपङ्कमग्नान्द्विजोत्तमान् ॥ अहो यल्लभ्यते भक्त्या न तत्कर्मशतैरपि ॥२५॥ सूत उवाच ॥ यत्र गोमिथुनं मग्नं तीर्थं तत्कपिलं विदुः ॥ मासि भाद्रपदे कृष्णषष्ठी भौमार्कसंयुता ॥२६॥ रोहिणीपातयुक्ता चेत्सा षष्ठी कपिला स्मृता ॥ तदा तत्र तु ये स्नान्ति भवाब्धिं ते तरन्ति वै ॥२७॥ सूत उवाच ॥ अरण्यो नाम राजा तु राज्यं त्यक्त्वा विरक्तिमान् ॥ पुत्रे राज्यधुरं न्यस्य गोकर्णक्षेत्रमागमत् ॥२८॥ तीर्थं कृत्वा विधानेन तपस्तेपे निरामयम् ॥ प्रसन्नीकृत्य देवेशं सिद्धिं प्राप्य महेश्वरात् ॥२९॥ तत्रोवास यथाकामं गोकर्णे क्षेत्रसत्तमे ॥ तत्तीर्थस्नानमात्रेण राजसूयफलं लभेत् ॥३०॥ सूत उवाच ॥

सुनादो नाम विप्रेन्द्रः पातालतलमागमत् ॥ मणिनागान्नागराजाद्गृहीत्वा लिङ्गमुत्तमम् ॥३१॥ गोकर्ण क्षेत्रमासाद्यास्थाप्य लिंङ्गं मनोरमम् ॥ तदर्चनप्रभावेण सायुज्यमगमदृषिः ॥३२॥ नादेश्वरमिति ख्यातं तल्लिङ्गं भरतर्षभ ॥ अधस्तादवने राजन्निदानीं तत्र वर्तते ॥३३॥ ताड्यमाने पदा तत्र नादयत्यवनीतलम् ॥ तीर्थं तत्र तु तस्यैव नादतीर्थमिति श्रुतम् ॥३४॥ दृष्टमात्रे तु तल्लिङ्गे स्वर्गं गच्छन्ति देहिनः ॥ सूत उवाच ॥ अशोको नाम राजासीत्प्लक्षद्वीपाधिपः पुरा ॥३५॥ तस्य चासीत्पुत्रशतं तथा पौत्रादिसन्ततिः ॥ कन्याशतं च तस्यासीत्स्वं राज्यं पर्यपालयत् ॥३६॥ ततः शत्रुरभूत्तस्य सुमतिर्नाम पार्थिवः ॥ अशोकस्य पुरीं रुध्वा युद्धं कृत्वा सुदारुणम् ॥३७॥ अशोकं नृपतिं जित्वा पुत्रादीनवधीत्ततः ॥ ततः स राजा सप्ताङ्गं हित्वा वह्नेः प्रसादतः ॥३८॥ लब्धं तुरगमारुह्य जम्बुद्वीपं ययौ क्षणात् ॥ गोकर्णे शतशृङ्गाद्रौ दृष्ट्वा स्वस्य पितामहान् ॥३९॥ अग्निद्युतिं चाग्निबाहुं मेधाश्वं पुरुमेव च ॥ तेषां चैवोपदेशेन तैः सार्कं तप आचरत् ॥४०॥ आविर्बभूव पुरतस्तुष्टोस्मीत्याह तान् शिवः ॥ अशोक उवाच ॥ शत्रुणापहृतं राज्यं पुत्रपौत्रादि यद्धनम् ॥४१॥ तत्सर्वं त्वत्प्रसादेन लभेय करुणानिधे ॥ शिव उवाच ॥ न शोकस्ते भवेद्भूयः सर्वं प्राप्स्यसि चिन्तितम् ॥४२॥ इति दत्वा वरं

शम्भुस्तत्रैवान्तरधीयत ॥ अशोकः स्वां पुरीं प्राप्य यथापूर्वमतिष्ठत ॥४३॥ अशोकपञ्चकमिति तीर्थानां पञ्चकं विदुः ॥ स्नात्वा वैशाखपूर्णायां दुष्टसङ्गाद्विमुच्यते ॥४४॥ कामाघनाशिनीनद्याश्चोत्पत्तिं कथयामि ते ॥ हरभालाग्निना दग्धः पूर्वं कामः शुचान्वितः ॥४५॥ शिवे कृतस्वाघशान्त्यै त्रिः परीत्य धरामिमाम् ॥ अनर्होऽपि प्रवेष्टुं स गोकर्णं क्षेत्रमुत्तमम् ॥४६॥ तस्मात्क्षेत्राद्बहिः स्थित्वा तपस्तीव्रमतप्यत ॥ दिव्यवर्षसहस्रन्तु लिङ्गं संस्थाप्य शाङ्करम् ॥४७॥ ततस्तुष्टो महादेवो वरयेत्याह तं नृप ॥ स्तुत्वा तं मन्मथो वव्रे वरानभिमतांस्तदा ॥४८॥ मन्मथ उवाच ॥ देवानां वचनात्पूर्वं त्वयि द्रोहमकारिषम् ॥ तद्दोषशान्तिर्मे भूयाच्छरीरं च वृणे प्रभो ॥४९॥ क्षेत्रस्यान्तः प्रवेशश्च त्वयि भक्तिं च शाश्वतीम् ॥ शिव उवाच ॥ वसुदेवगृहे साक्षाद्भगवान्कमलापतिः ॥५०॥ यदावतरणं कुर्यात्तस्य पुत्रत्वमाप्नुहि ॥ गोकर्णे त्वत्प्रवेशार्थं प्रायश्चित्तं करोम्यहम् ॥५१॥ इत्युक्त्वा भगवान् शम्भुस्त्रिशूलेन तदा नृप ॥ चखान भूतलं गङ्गा पातालादूर्ध्वमागता ॥५२॥ अनुज्ञातस्त्वीश्वरेण स्नानं तत्र यथाविधि ॥ कृत्वा कामो विशुद्धात्मा वरं वव्रे कृपानिधिम् ॥५३॥ काम उवाच ॥ लिङ्गमेतत्पूजकानां कामदं स्यात्सदाशिव ॥ अघनाशननाम्नीयं नदीनां प्रवरा भवेत् ॥५४॥ शङ्कर उवाच ॥ यदुक्तं तु

त्वया काम तत्सर्वं भवति ध्रुवम् ॥ ब्रह्महा गुरुतल्पी वा स्वर्णस्तेयी च मानवः ॥५५॥ सुरापानरतो वापि संयुक्तो ह्युपपातकैः ॥ स्नात्वा संपूज्य कामेशं सर्वपापैः प्रमुच्यते ॥५६॥ इत्युक्त्वा भगवाञ्छम्भुस्तत्रैवान्तरधीयत ॥ कामो गोकर्णमासाद्य कोटितीर्थस्य पूर्वतः ।५७॥ लिङ्गं संस्थाप्य विधिना पूजयित्वा च भक्तितः ॥ कृतकृत्यत्वमापन्नो यथाकाममुवास ह ॥५८॥ श्रुणु राजन्प्रवक्ष्यामि इतिहासं पुरातनम् ॥ पुरा कलिङ्गदेशीयो ब्राह्मणः शम्भुनामकः ॥५९॥ सदा दुर्जनसंयुक्तः कामचारी द्विजाधमः ॥ विमार्गनिरतो नित्यं द्यूतचौर्यविशारदः ॥६०॥ स्वकर्मणः परित्यागी शूद्रवृत्तिरतः सदा॥ कदाचिदर्धरात्रौ तु मातृसङ्गमथाकरोत् ॥६१॥ तेन पापेन महता लोकदूष्योऽभवन्नृप ॥ पश्चात्तापाभिभूतः सन् बभ्राम जगतीतले ॥६२॥ तिरस्कृतः स सर्वैश्च मुनिभिर्भावितात्मभिः ॥ ततो दुर्वासं दृष्ट्वा प्रणम्य प्राञ्जलिर्नृप ॥६३॥ प्रसाद्योवाच विप्रः सः दुर्वासास्तु तपोनिधिः ॥ प्राह त्वत्कृत पापस्य निष्कृतिर्नास्ति कुत्रचित्॥६४॥ तथापि वक्ष्ये पापस्य निष्कृतिं श्रुणु भो द्विज ॥ गोकर्णाख्यं महाक्षेत्रमस्ति पापविनाशनम् ॥६५॥ तत्रास्ति सर्वपापघ्नी नदी कामाघनाशिनी ॥ शिवत्रिशूलजनिता मन्मथस्याघशान्तये ॥६६॥ मात्रा सहैव त्वं गच्छ तत्र स्थित्वा विधानतः ॥ स्नात्वा कामाघना

शिन्यां जपन्पञ्चाक्षरीं मनुम् ॥६७॥ तत्र कामेश्वरं लिङ्गं पूजयस्व विधानतः ॥ इति दुर्वाससो वाक्यं श्रुत्वा तं प्रणिपत्य च ॥६८॥ कामाघनाशिनीं प्राप्य तत्रोवास चिरं द्विजः ॥ स्नात्वा कामाघनाशिन्यां कामेशं परिपूजयन् ॥६९॥ जपन्पञ्चाक्षरीं विद्यां द्वादशाब्दमुवास ह ॥ ततो गोकर्णमासाद्य कोटितीर्थादिषु क्रमात् ॥७०॥ स्नात्वा सर्वेषु तीर्थेषु तल्लिङ्गं परिपूज्य च ॥ कृतकृत्यस्ततो भूत्वा ययौ स्वभवनं द्विजः ॥७१॥ स्वाचारनिरतः शान्तो बभूव द्विजसत्तमः ॥ महापातकयुक्तो वा संयुक्तो ह्युपपातकैः ॥७२॥ स्नात्वा कामाघनाशिन्यां नरो मुच्येत पातकैः ॥ सूत उवाच ॥ पौलस्त्यपुत्रा राजेन्द्र बहवः सिद्धिमागताः ॥७३॥ गोकर्णे रावणश्चैव कुम्भकर्णो विभीषणः ॥ तपस्तेपुर्निराहारा ब्रह्मध्यानपरायणाः ॥७४॥ शिरांसि स्वानि संछिद्य जुहाव दशकन्धरः ॥ ददौ तेषां वरं ब्रह्मा यथाभिलषितं नृप ॥७५॥ अणिमादिमहासिद्धिमायुर्योगं च रावणः ॥ अवध्यत्वं सर्वभूतैः ऋते मानुषमात्रतः ॥७६॥ कुम्भकर्णो महानिद्रां कनीयांस्तु विभीषणः ॥ धर्मे रतिं विष्णुभक्तिममरत्वं च लब्धवान् ॥७७॥ रावणेनार्चितं लिङ्गं कुम्भकर्णेन पूजितम् ॥ विभीषणेश्वरं लिङ्गं पूजयन्ति नरा भुवि ॥७८॥ दीर्घायुषो भवन्त्यद्धा गोकर्णे तद्वने नृप ॥ श्लेष्मातकमिति श्रेष्ठं सर्वसिद्धनिषेवितम् ॥७९॥

हेतिर्नाम प्रहेतिश्च विश्वचित्तिर्विदूरथः ॥ एते चान्ये च बहवस्तत्र सिद्धिमुपागताः ॥८०॥ रावणाद्या वरं लब्ध्वा ऐश्वर्यबलदर्पिताः ॥ मातृवाक्यात्तदा युद्धे जित्वा वैश्रवणं नृप ॥८१॥ अपहृत्य पुरीं लङ्कां विमानमपि पुष्पकम् ॥ चक्रे लङ्कां राजधानीं राक्षसैः सह रावणः ॥८२॥ कुबेरस्तु पितुर्वाक्यात्तपस्तप्तुं सुदुश्चरम् ॥ गोकर्णं क्षेत्रमासाद्य श्लेष्मातकवने शुभे ॥८३॥ लिङ्गं तत्र प्रतिष्ठाप्य तीर्थं कृत्वा तु भक्तितः ॥ तपस्तप्त्वा विधानेन प्रत्यक्षीकृत्य शङ्करम् ॥८४॥ अलकाख्यां पुरीं रम्यां निधीनष्टौ श्रियं तथा ॥ उदग्दिगाधिपत्यं च हरमैत्रीं तथा नृप ॥८५॥ लब्ध्वा वैश्रवणः पश्चादध्युवासालकां पुरीं ॥ स्नात्वा वैश्रवणे तीर्थे कुबेरेश्वरमर्चयेत् ॥८६॥ कार्तिके तु त्रयोदश्यां तस्य लक्ष्मीः स्थिरा भवेत् ॥८७॥ इति श्रीस्कान्दे गोकर्णखण्डे श्रीगोकर्णमाहात्म्ये नवमोऽध्यायः ॥९॥

सूत उवाच ॥ पुरा विवादो ह्यभवद्ब्रह्मविष्ण्वोर्नृपोत्तम ॥ अहं श्रेष्ठश्चाहमिति तयोर्युद्धमभूत्तदा ॥१॥ तत्र ह्याविरभूल्लिङ्गमीश्वरश्चाययौ नृप ॥ शिवोऽप्युवाच तौ देवौ माभूद्वां कलहो मिथः ॥२॥ अस्य लिङ्गस्य मूर्धानं मूलं वा योऽभिपश्यति ॥ स श्रेष्ठ इति मन्येऽहं गच्छतं शीघ्रमेव हि ॥३॥ इत्युक्ते हंसरूपेण ब्रह्मा द्रष्टुं शिरो ययौ ॥ विष्णुर्वराहरूपोऽधः मूलं द्रष्टुमगान्नृप ॥४॥ धावन्नूर्ध्व

मुखो ब्रह्मा मध्ये दृष्ट्वा तु केतकीम् ।। लिङ्गात्तुङ्गाद्विगलितां तां कृत्वा साक्षिणीं विधिः ॥५॥ शिव-स्य सन्निधिं प्राप विष्णुः कूर्मावधिं गतः ॥ लिङ्गमूलमदृष्ट्वैव हरस्यान्तिकमाययौ ।६॥ ततः शिवेन पृष्टस्तु ब्रह्मा प्रोवाच शङ्करम् ॥ दृष्टं मया शिर इति साक्षिणी केतकी यतः ॥७॥ केतक्यपि तथेत्याह विष्णुं पप्रच्छ शङ्करः ॥ ततो हरिर्हरं प्राह मया मूलं न लोकितम् ॥८॥ क्रुद्धश्चासत्यवचनात्केतकीमशपत्तदा ॥ कूटसाक्ष्यापराधेन अयोग्या भव मेऽर्चने ॥९॥ ब्रह्माणश्चाशपद्रुद्रो ह्यपूज्यो भव विष्टपे ॥ तेन प्रीतो हरिं प्राह भव त्वं लोकपूजितः ॥१०॥ तत उत्पादयामास कोपादुत्कटभैरवम् ॥ उवाच भैरवं शम्भुः स्रष्टुरूर्ध्वं शिरो हर ॥११॥ तच्छ्रुत्वा भैरवः शीघ्रं स्रष्टुरूर्ध्वं शिरोऽहनत् ॥ स ब्रह्महत्याग्रस्तः सन्बभ्राम जगतीतलम् ॥१२॥ ततो ब्रह्मा चिन्तयित्वा गोकर्णं प्राप्य तत्र हि ॥ शतशृङ्गगिरौ लिङ्गं तीर्थं कृत्वा गिरेरधः ॥१३॥ तपः कृत्वा च सुचिरं प्रत्यक्षीकृत्य शङ्करम् ॥ यज्ञे पूजामवाप्य स्वां मूर्तिं संस्थाप्य तत्र तु ॥१४॥ सत्यलोकं ययौ ब्रह्मा यथाकामं कुरूद्वह ॥ ब्रह्मकुण्डे नरः स्नात्वा ब्रह्मेशं परिपूज्य च ॥१५॥ तन्मूर्तिं पूजयेद्राजन् दीर्घायुष्मान्भवेद्ध्रुवम् ॥ सूत उवाच ॥ केतक्यप्याश्रमं कृत्वा तीर्थं कृत्वा तु निर्मलम् ॥१६॥ हरं संतोष्य तपसा भक्त्या चानन्यपू-

र्वेया ॥ शिवरात्रौ पुण्यदिने पूजायोग्या बभूव सा ॥१७॥ तद्दिने तां समादाय भक्त्या यश्चार्चयेच्छिवम् ॥ सर्वक्रतुफलं तस्य भवत्येव न संशयः ॥१८॥ कूटसाक्ष्यभवं पापं तत्र स्नानाद्विनश्यति ॥ सूत उवाच ॥ भैरवोऽपि ततः प्राप्य गोकर्णं क्षेत्रमुत्तमम् ॥१९॥ तत्राश्रमपदं कृत्वा चचार सुमहत्तपः ॥ घण्टाकर्णेन सहितो दिव्यवर्षसहस्रकम् ॥२०॥ ततस्तत्तपसा शम्भुस्तुष्ट आगत्य चाब्रवीत् ॥ कालभैरव तुष्टोऽस्मि वरं वरय काङ्क्षितम् ॥ २१ ॥ भैरव उवाच ॥ ब्रह्महत्येयं देव बाधते मां दिवानिशम् ॥२२॥ तन्मोक्षं मे कुरु विभो यदि तुष्टोऽसि शङ्कर ॥ शङ्कर उवाच ॥ मत्प्रसादाद्भैरवाद्य ब्रह्महत्याविनाशिता ॥ पाता सुकृतिनां त्वं हि शास्ता दुष्कृतिनां भव ॥२३॥ गच्छ शीघ्रं कुरुक्षेत्रं विष्णुर्मोक्ष्यति तत्र तु ॥ घण्टाकर्णोऽपि संप्राप्य क्षेत्रपालत्वमञ्जसा ॥२४॥ तत्रोवास यथाकामं तत्रैवान्तर्दधे शिवः ॥ ततः स भैरवो ब्रह्मकपालेन समन्वितः ॥२५॥ कुरुक्षेत्रं समासाद्य तत्र दृष्ट्वा जनार्दनम् ॥ तत्र क्षिप्त्वा कपालं तु गोकर्णं पुनरागमत् ॥२६॥ तत्रैव वसतिं चक्रे घण्टाकर्णेन संयुतः ॥ शिक्षकः पापिनां नित्यं रक्षन्सुकृतिशालिनाम् ॥२७॥ सूत उवाच ॥ हरनेत्राग्निना दग्धे मन्मथे मुनयो नृप ॥ शिवस्य निकटं गत्वा कामं देहीति चाब्रुवन् ॥२८॥ हर उवाच ॥ इतः

परं न तस्याङ्गं चित्तजन्मा भविष्यति ॥ वैवस्वतेऽन्तरे विप्राः कृष्णे पुत्रत्वमाप्नुयात् ॥२९॥ इत्युक्ते शम्भुना कामः शिवचेतस्यभूत्ततः ॥ ऐक्षिष्टपार्वतीं शम्भुर्ललाटात्तेज आपतत् ॥३०॥ स्वस्याकृतिः कुमारोऽभूद्गौर्यै तं प्रददौ शिवः ॥ विनायकाख्यां गमितः कदाचित्पार्वती नृप ॥३१॥ तं दृष्ट्वा तनयं देवी तं भर्तारममन्यत ॥ ततो ज्ञात्वात्मजं क्रोधादन्नपद्विकृतो भव ॥३२॥ गजाननो दशभुजः खर्वपादाम्बुजद्वयः ॥ लम्बोदरः शूर्पकर्णः सोऽभून्मातुश्च शापतः ॥३३॥ शङ्करः स्वात्मजं दृष्ट्वा पृष्टः क इति पार्वतीम् ॥ विनायकस्तव सुत इति सर्वं जगाद ह ॥३४॥ शिवः स्वपुत्रमादाय इदं वचनमब्रवीत् ॥ मातृशापात्तु वैरूप्यं तव प्राप्तं गजानन ॥३५॥ इदमेव यथा भूयात्पुनः सौरूप्यमात्मनः ॥ तथा गोकर्णमासाद्य तपः कुरु विनायक ॥३६॥ सोऽपि गोकर्णमासाद्य तीर्थे कृत्वा सुनिर्मलम् ॥ तपश्चचार सुचिरं प्रसन्नोऽभून्महेश्वरः ॥३७॥ देवैर्ब्रह्मादिभिः सार्धं वरं ब्रूहीत्यभाषत ॥ विनायक उवाच ॥ मातृशापविमोक्षं च देहि मे परमेश्वर ॥३८॥ शिव उवाच ॥ वैरूप्यं तव सौरूप्यं भवत्येव गजानन ॥ गणानामधिपश्चैव विघ्नानामधिपो भव ॥३९॥ ततो देवाः स्वायुधानि ददुस्तस्मै मुदान्विताः ॥ विष्णुः स्वतनयां शक्तिं ददौ तस्मै नराधिप ॥४०॥ इति दत्वा वरं तस्मै रुद्राद्या देवता

गणाः ॥ विनायकेन सहितास्तत्रैवान्तर्दधुः सुराः ॥४१॥ तीर्थे वैनायके स्नात्वा गणानान्त्वेति मन्त्र
तः ॥ पूजयेच्च गणाध्यक्षं सर्वान्कामानवाप्नुयात् ॥४२॥ सूत उवाच ॥ हिरण्यकशिपोः पुत्रः प्रह्ला
दाख्यो महासुरः ॥ पितृद्रोहं समाधाय ततो नारदवाक्यतः ॥४३॥ गोकर्णं क्षेत्रमासाद्य कोटितीर्थ
स्य दक्षिणे ॥ नृसिंहमूर्तिं संस्थाप्य तपस्तेपे यतात्मवान् ॥४४॥ ततः प्रसन्नो भगवान्नरसिंहः समा
गमत् ॥ त्वं वरं वरयेत्याह प्रह्लादो वाक्यमब्रवीत् ॥४५॥ मया कृतः पितृद्रोहस्तन्मोक्षं मे प्रसादय ॥
श्रीभगवानुवाच ॥ पितृद्रोहाद्विमुक्तस्त्वं लोकपूज्यो भवाधुना ॥४६॥ वैशाखे शुक्लभूते तु मां पूजय
ति यो नरः ॥ पितृद्रोहादिकं पापं विलयं याति तत्क्षणत् ॥४७॥ इत्युक्त्वा नृहरिस्तत्र तस्यां मूर्तौ
व्यलीयत ॥ इति लब्ध्वा वरं सोऽपि प्रह्लादः स्वपुरं ययौ ॥४८॥ सूत उवाच ॥ उषा बाणासुरसुता
कृष्णपौत्रं जहार च ॥ अदृष्ट्वा स्वस्य पौत्रं तु कृष्णश्चिन्तापरोऽभवत् ॥४९॥ ततो नारदवाक्येन गो
कर्णं क्षेत्रमागमत् ॥ स स्नात्वा कोटितीर्थे तु पूजयित्वा महाबलम् ॥५०॥ वार्षिकांश्चतुरो मासांश्चचा
र सुमहत्तपः ॥ शिवः प्रत्यक्षतां प्राप्त उवाच मधुसूदनम् ॥५१॥ कृष्णविष्णो महाबाहो मां जित्वा
समरेऽधुना ॥ बाणस्य दर्पहननं कृत्वाप्नुहि स्वपौत्रकम् ॥५२॥ इत्युक्त्वान्तर्दधे शम्भुः कृष्णो द्वारवतीं

ययौ ॥ बाणासुरं विजित्वा तु स्वपौत्रं लब्धवान्नृप ॥ ५३॥ तां कृष्णमूर्तिं संपूज्य नरः कामानवाप्नु
यात् ॥ दुर्वासा वै मुनिश्रेष्ठो दत्तात्रेयेण संयुतः ॥५४॥ तपः कृत्वा तु गोकर्णे योगसिद्धो बभूव ह ॥
शङ्खासुरेणापहृता वेदाः शास्त्राणि पार्थिव ॥५५॥ गोकर्णं क्षेत्रमासाद्य लिङ्गं कृत्वा पृथक्पृथक् ॥
तपश्चक्रुश्च नियताः प्रसन्नो विष्णुरब्रवीत् ॥५६॥ तुष्टोऽस्मि नितरां वेदाः शास्त्राणि तपसा च वः ॥
वेदशास्त्राण्यूचुः ॥ शङ्खासुरेणापहृता वयं सर्वे जनार्दन ॥५७॥ अस्मानुद्धर लिङ्गानि लोके पूज्यानि
सन्तु वै ॥ श्रीभगवानुवाच ॥ व्यासावतारं कृत्वा तु तीर्थयात्रापदेशतः ॥५८॥ अत्रागत्य तपः कृ
त्वा ह्युद्धरिष्यामि वै ध्रुवम् ॥ ये पूजयन्ति लिङ्गानि वेदशास्त्रयुता भुवि ॥५९॥ सप्तजन्मभवेयुर्वै त
दन्ते मोक्षमाप्नुयुः ॥ इति तेभ्यो वरं दत्वा तत्रैवान्तर्दधे हरिः ॥६०॥ व्यासः पराशरसुतस्तीर्थया
त्रां क्रमाच्चरन् ॥ गोकर्णं क्षेत्रमासाद्य तपस्तेपे यतात्मवान् ॥६१॥ शुकमुत्पादयामास तथापि तप
आचरत् ॥ एवं तपस्यतस्तस्य प्रसन्नोऽभून्महेश्वरः ॥६२॥ उवाच व्यासं नृपते व्यास ते ह्याश्रमः
शुभः ॥ तस्मोऽसुरेण पापेन वेदाः शास्त्राणि खण्डिताः ॥६३॥ विभाजयस्व तान्त्सर्वानधीयीरन् द्वि
जा भुवि ॥ इत्युक्त्वान्तर्दधे शम्भुर्व्यासस्तु तदनन्तरम् ॥६४॥ वेदाञ्छास्त्राणि च तदा विभागं कृ

तवान्नृप ॥ शुकोऽपि तप आस्थाय योगसिद्धिमवाप्तवान् ॥६५॥ सूत उवाच ॥ विश्वकर्मा तपस्तप्त्वा गोकर्णे लिङ्गमुत्तमम् ॥ पूजयित्वा विधानेन ब्रह्माणं पर्यतोषयत् ॥६६॥ प्रसादाद्ब्रह्मणो राजन्मनःशिल्पं स लब्धवान् ॥ सूत उवाच ॥ गौतमेन पुरा शक्रः शप्तोऽभूत्काममलोलुपः ॥६७॥ लिङ्गं संस्थाप्य गोकर्णे तप आधाय भक्तितः ॥ परितोष्य महेशानं तपसा सिद्धिमाप्तवान् ॥६८॥ गौतमोऽपि मुनिश्रेष्ठस्त्यक्त्वाहल्यां ततो वने ॥ भुवः प्रदक्षिणं कुर्वन्गोकर्णं क्षेत्रमागमत् ॥६९॥ लिङ्गं तत्र प्रतिष्ठाप्य तपसा सिद्धिमाप्तवान् ॥ तृणाग्निरपि विप्रेन्द्रस्तपसा सिद्धिमाप्तवान् ॥७०॥ काश्यपोऽपि मुनिश्रेष्ठः कपोताख्यो महामुनिः ॥ सुरसा नागमाता च केसरी हनुमत्पिता ॥७१॥ विश्वेदेवाश्च वसवो ग्रहेन्द्राश्च भृगुर्मुनिः ॥ जमदग्निः क्रतुश्चैव तथैवाप्सरसां गणः ॥७२॥ शतशृङ्गे तपः कृत्वा सिद्धिं प्राप्ताः पुरा नृप ॥ अत्रेरङ्गिरसश्चैव तथा भौमस्य चाश्रमः ॥७३॥ एतेषामाश्रमं पुण्यं तीर्थं चैव यथाक्रमम् ॥ दर्शनादेव पापानि ज्ञानाज्ञानकृतानि च ॥७४॥ नश्यन्त्येव न संदेहो नृणां भरतसत्तम ॥ विश्वावसोस्तुम्बुरोश्च चित्रसेनस्य पार्थिव ॥७५॥ गन्धर्वाणां तथान्येषां सिद्धानां मरुतामपि ॥ किन्नराणां च साध्यानां गुह्यकानां च रक्षसाम् ॥७६॥ विद्याधराणां राजन्किम्पुरुषाणां तथैव च ॥

आश्रमाश्च बहून्यत्र तीर्थानि नृपसत्तम ॥७७॥ वाल्मीकिरपि गोकर्णे तपः कृत्वा विधानतः ॥ सि
द्धिं प्राप्य महादेवाद्यथाकाममतिष्ठत ॥७८॥ हनूमांस्तत्र राजेन्द्र वायुपुत्रो महाबलः ॥ तपश्चचार सु
चिरं घोरमुद्दिश्य शङ्करम् ॥७९॥ तपसा तस्य वीरस्य शिवः प्रत्यक्षतां गतः ॥ शिव उवाच ॥ तु
ष्टोऽसि ते हरिवर तपसा किमभीप्सितम् ॥८०॥ हनूमानुवाच ॥ युध्यमानस्य मे देव जयो भवतु
सर्वदा ॥ तथास्त्विति वरं दत्वा तत्रैवान्तर्दधे हरः ॥८१॥ हनूमेशं पूजयित्वा सर्वशत्रुजयं लभेत् ॥
सूत उवाच ॥ आर्याशृङ्गात्समागम्य दुर्गादेवी नृपोत्तम ॥८२॥ दुर्गाकुण्डमितिख्यातं तीर्थं कृत्वा सु
निर्मलम् ॥ तपः कृत्वा तु नियता सिद्धिमाप सुदुर्लभाम् ॥८३॥ शुम्भादिराक्षसान्हत्वा महाकाली नृ
पोत्तम ॥ स्वायुधानि च संक्षाल्य शतशृङ्गतटे शुभे ॥८४॥ तपसे कृतसङ्कल्पा आस्ते सा दक्षिणामुखा ॥
आयुधानि क्षालितानि यत्र तत्तीर्थमुत्तमम् ॥८५॥ तत्कालीह्रदमाख्यातं तं दृष्ट्वा पूजयेन्नृप ॥ महा
कालीं समभ्यर्च्य सर्वान्कामानवाप्नुयात् ॥८६॥ गोकर्णक्षेत्ररक्षार्थं नियुक्ता शम्भुना हि सा ॥ सूत
उवाच ॥ अत्रिवंशोद्भवा विप्राश्चत्वारो विन्दुनामकाः ॥८७॥ अदृश्याः सर्वभूतानां दुर्गादेशं समाश्रि
ताः ॥ तपस्तप्त्वा तु नियतं काष्ठभूता वनेऽवसन् ॥८८॥ देवानां वचनाच्छम्भुस्तेषां प्रत्यक्षतां गतः ॥

काष्ठभूतान्तसमालोक्य चन्द्रोऽमृतमसिञ्चत ॥८९॥ शङ्कर उवाच ॥ युष्माभिरमृतं पीतं सिद्धिं प्राप्ताः सुदुर्लभाम् ॥ अधिगम्य परं ब्रह्म ब्रह्मभूताश्चरिष्यथ ॥९०॥ तीर्थानि वो महाभागाः सर्वपापहराणि वै ॥ आस्वर्लोकाद्द्विजश्रेष्ठाः पातालावधि सत्तमाः ॥९१॥ धाराश्चान्ध्यस्तु नित्या वै सन्तु पापहरा भुवि ॥ इति दत्वा वरं शम्भुस्तत्रैवान्तरधीयत ॥९२॥ धर्मराजानुजो भीमस्तीर्थयात्रापदेशतः ॥ मातरं स्वां समादाय गोकर्णं क्षेत्रमागमत् ॥९३॥ तदा तत्रत्य ऋषिभिर्बोधितोऽगात्तदन्तिकम् ॥ पाषाणेनावृतं दृष्ट्वा तीर्थं तद्देशबिन्दुकम् ॥९४॥ गदया ताडयामास पाषाणं मार्गमातनोत् ॥ तदा भीमगदातीर्थमिति ख्यातमभून्नृप ॥९५॥ इति श्रीस्कान्दे० श्रीगोकर्णमाहात्म्ये दशमोऽध्यायः ॥१०॥

सूत उवाच ॥ रुद्रपादस्य माहात्म्यं वक्ष्यामि शृणु पार्थिव ॥ मथुरायां द्विजः कश्चित्सुहोत्र इति विश्रुतः ॥१॥ ब्रह्मक्षत्रविशः शूद्रान्याजयन्परवञ्चकः ॥ महादानग्रही पर्वकाले दुष्टप्रतिग्रही ॥२॥ चन्द्रसूर्यग्रहे चैव श्राद्धे दानग्रही सदा ॥ लिङ्गार्चनादि न कृतं तथा मासव्रतादिकम् ॥३॥ न व्ययं कृतवान्सोऽपि देशाद्देशं व्रजन्नपि ॥ द्रव्यन्यासाय स ययावेकदा सह्यकानने ॥४॥ दृष्टवानुच्छ्रितं तत्र निष्पत्रं शाल्मलीतरुम् ॥ तच्छाखालम्बमानांश्च ऊर्ध्वपादानतिकृशान् ॥५॥ भयानकानूर्ध्वरोम्णः

शुष्ककण्ठोष्ठतालुकान् ॥ क्रन्दमानान्स दृष्ट्वा तु वेगेन महता ययौ ॥६॥ धावमानं समालोक्य ज्ञात्वा तं च स्ववंशजम् ॥ आहूय तं पिशाचास्ते प्रोचुः प्रीतियुतं वचः ॥७॥ पिशाचा ऊचुः ॥ सुहोत्रागच्छ भद्रं ते मा भैषीः पुत्र साम्प्रतम् ॥ पालयास्मान्पितॄंस्तेऽद्य प्राक्तनेन तु कर्मणा ॥८॥ त्वया कृतेन पापेन पैशाचीं योनिमागतान् ॥ पतमानांस्तु नरके त्वमुद्धर्तुमिहार्हसि ॥९॥ स्वपितॄणां वचः श्रुत्वा सुहोत्रोऽतीव विह्वलः ॥ साष्टाङ्गं प्रणिपत्याह ह्यात्मानं निन्दयन्बहु ॥१०॥ अपराधः कृतो योवै स क्षन्तव्यो हि साम्प्रतम् ॥ केन पुण्येन भवतां स्वर्गलोको भवेद्ध्रुवम् ॥११॥ पितर ऊचुः ॥ श्रुणु राजन्महत्पुण्यं गोकर्णं गच्छ साम्प्रतम् ॥ रुद्रपादं नाम सुत वर्तते तच्छिलातले ॥१२॥ पुरा मित्रसहो राजा रक्षोऽभूद्गुरुशापतः ॥ ततः स भक्षयामास वसिष्ठस्यात्मजाञ्छतान् ॥१३॥ दुर्मुखत्वं तदा प्राप्ता वसिष्ठस्य सुतास्ततः ॥ वसिष्ठेन समाज्ञप्तः शक्तिपुत्रः पराशरः ॥१४॥ गोकर्णं क्षेत्रमासाद्य गत्वा रुद्रपदं शुभम् ॥ चक्रे श्राद्धं विधानेन पिण्डं दत्वा तिलोदकम् ॥१५॥ ततः शक्त्यादयः सर्वे ब्रह्मलोकं ययुः सुत ॥ तस्मात्पुत्र त्वमपि वै गत्वा रुद्रपदं शुभम् ॥१६॥ तत्पादं सम्यगभ्यर्च्य श्राद्धं कुरु विधानतः ॥ दानं वित्तानुसारेण यावच्छम्भुः प्रसीदति ॥१७॥ इति श्रुत्वा पितॄव

चो रुद्रपादं ततोऽगमत् ॥ नित्यं समुद्रे स्नात्वा तु श्राद्धं कुर्वन्समाहितः ॥१८॥ तपश्चचार सुचिरं कुर्वन् दानानि पार्थिव ॥ स्वयं भुञ्जन्हविष्यान्नं पितॄणां मुक्तये नृप ॥१९॥ ततो बहुतिथे काले शिवः प्रत्यक्षतां गतः ॥ शिव उवाच ॥ तुष्टोऽस्मि नितरां ब्रह्मन्वरं वरय काङ्क्षितम् ॥२०॥ सुहोत्र उवाच ॥ यदि तुष्टोऽसि देवेश पितॄणां मुक्तिदो भव ॥ शिव उवाच ॥ पितॄणां तव विप्रेन्द्र स्वर्गलोको भवेद्ध्रुवम् ॥२१॥ कन्यामासे तु कुतुपे अत्रागत्य नरोत्तमः ॥ श्राद्धं कुर्वन्रुद्रपादे उद्धरेत्स्वपितॄन्त्स्वयम् ॥२२॥ मम लोकं समासाद्य अमृतत्वं स गच्छति ॥ इत्युक्त्वा ब्राह्मणं राजंस्तत्रैवान्तर्दधे हरः ॥२३॥ ततस्तत्पितरो जग्मुर्ब्रह्मलोकं मुदान्विताः ॥ सुहोत्रोऽपि द्विजश्रेष्ठो देहान्ते स्वर्गतिं ययौ ॥२४॥ सूत उवाच ॥ धर्मेण निर्जितोऽधर्मो धर्मं जेष्य इति ध्रुवम् ॥ गोकर्णं क्षेत्रमासाद्य तपस्तप्त्वा समाहितः ॥२५॥ प्रसन्नीकृत्य देवेशं वरं लब्ध्वा महेश्वरात् ॥ कलौ युगे ह्यधर्मस्तु धर्मं जिग्ये नृपोत्तम ॥२६॥ कार्तिक्यां सोमवारे तु तीर्थे स्नात्वा समाहितः ॥ अधर्मं नाप्नुयात्कोऽपि अग्निष्टोमफलं लभेत् ॥२७॥ सूत उवाच ॥ असूया मत्सरी चण्डी क्रोधा द्वेषा क्षमा तथा ॥ ईर्ष्यालक्ष्मीश्च घोरा च मोहना च नृपोत्तम ॥२८॥ निर्जिता धर्मपुत्रैस्तु सत्याद्यैर्दुःखिता भृशम् ॥ गोकर्णं क्षेत्र

मासाद्य तपस्तप्त्वा यथाविधि ॥२९॥ प्रसन्नीकृत्य विश्वेशं सम्प्राप्ते ह्यन्तिमे युगे ॥ धर्मस्य तनयान्ह त्वा स्वयं च बलिनोऽभवन् ॥३०॥ तीर्थेषु तेषु स्नातानां तत्तज्जातं भयं न हि ॥ सूत उवाच ॥ क्षमा सत्यं दमः कीर्तिरहिंसानन्द एव च ॥३१॥ बुद्धिर्मानस्तथा राजन् लक्ष्मीर्लज्जा श्रुतिः स्मृतिः ॥ तथा मेधाधर्मसुतैरसूयाद्यैः पराजिताः ॥३२॥ ब्रह्मणो वचनाद्राजन् गोकर्णं क्षेत्रमागमन् ॥ शाल्मकिन्यास्तटे रम्ये तपस्तप्त्वा चिरं नृप ॥३३॥ प्रसन्नीकृत्य देवेशं वरं लब्ध्वा सुदुर्लभम् ॥ अधर्मतनयाञ्जित्वा स्वयं च बलिनोऽभवन् ॥३४॥ तीर्थेषु तेषु स्नातानां गुणास्तेषां भवेद्ध्रुवम् ॥ सूत उवाच ॥ विन्ध्येन निर्जितो मेरु पुत्राभ्यां सह दुःखितः ॥३५॥ गोकर्णं क्षेत्रमासाद्य तपः कृत्वातिदारुणम् ॥ प्रत्यक्षीकृत्य देवेशं वरं प्राप्य मनोगतम् ॥३६॥ मेरुं विजित्य स्वस्थोऽभूत्पुत्राभ्यां सह पार्थिव ॥ रम्यो रमणकश्चैव मेरुपुत्रौ नृपोत्तम ॥३७॥ सूत उवाच ॥ कृतत्रेतौ द्वापरश्च कलिश्चेति चतुर्युगाः ॥ गोकर्णं क्षेत्रमासाद्य सिद्धिं प्राप्ता महेश्वरात् ॥३८॥ तीर्थेषु तेषु स्नातानां स्वर्गलोको भवेद्ध्रुवम् ॥ सूत उवाच ॥ दिशश्चापि तपस्तप्त्वा सिद्धास्तत्र कुरूद्वह ॥३९॥ गालवश्च कहोळश्च तपस्तप्त्वातिदारुणम् ॥ भक्त्या शिवं समाराध्य सिद्धिं प्राप्तौ द्विजोत्तमौ ॥४०॥ कनकाख्यो राजपुत्रस्तत्र संपूज्य शङ्करम् ॥

पित्रा त्यक्तं स्वकं राज्यं प्राप्तः शम्भो रनुग्रहात् ॥४१॥ कपश्च रोमशश्चैव परां सिद्धिमुपागतौ ॥ सूत उवाच ॥ शृणु राजन् प्रवक्ष्यामि शाल्मकिन्याः कथां शुभाम् ॥४२॥ पुरा भगीरथो राजा गङ्गामाहृतवान्दिवः ॥ मार्गे तु जह्नुना पीता सेवयित्वा तु तं मुनिम् ॥४३॥ तस्मादानीय गङ्गां तु पाताले भस्मशेषितान् ॥ उद्धारयामास पितॄन् समुद्रं प्रविवेश सा ॥४४॥ मुनिः सत्यतपा नाम जह्नोराश्रममागमत् ॥ पूजयामास तं जह्नुः पृष्टः क्षेमादिकं नृप ॥४५॥ सत्यतपा उवाच ॥ पुष्पभद्रानदीतीरे स्थितोऽहं जाह्नवीं गतः ॥ तत्र स्नात्वा त्विहायातः शृणुष्वेदं वचो मम ॥४६॥ त्वया पीता हि गङ्गेति लोकवादोऽभवन्मुने ॥ कश्यपाद्यैर्मुनिवरैर्गदितं तत्र वै श्रुतम् ॥४७॥ तद्वाददोषशान्त्यर्थं गच्छ गोकर्णमद्य वै ॥ तत्र शाल्मकिनी नाम नदी ह्यास्ते मलापहा ॥४८॥ तटे तत्रास्थाप्य गङ्गामूर्तिं पूजय नित्यशः ॥ एवं कृते लोकवादो नश्यत्येव न संशयः ॥४९॥ तत्र स्नात्वा पुरा जह्नो ब्राह्मणौ कूटसाक्षिणौ ॥ रोमपादपृथुग्रीवौ मुक्तौ स्वकृतपातकात् ॥५०॥ जह्नुरुवाच ॥ किं कारणं कूटसाक्ष्यमूचतुस्तौ महामुने ॥ शाल्मकिन्यां कथं स्नातौ विमुक्तौ कुत्र संस्थितौ ॥५१॥ शाल्मकिन्यास्तथोत्पत्तिं नामधेयं च शंस मे ॥ सत्यतपा उवाच ॥ रोमपादपृथुग्रीवौ मत्समीपे स्थितावुभौ ॥५२॥ वेदाभ्यासं प्रकुर्वन्तौ ब्रह्मचर्य-

परायणौ ॥ कदाचिद्भृगुवंश्यश्च कण्डुर्नामागतश्च माम् ॥५३॥ वेदमभ्यस्तवान् सोऽपि मत्सेवातत्परो ह्यभूत् ॥ एकदा मां पृथुग्रीवस्तूवाच शृणु मे वचः ॥५४॥ कण्डुना वै सुरा पीता गुरो दृष्टं न संशयः ॥ रोमपादेन तत्सर्वमुक्तं स तु विचार्यताम् ॥५५॥ तच्छ्रुत्वा रोमपादाख्यमाहूय परिपृष्टवान् ॥ सोऽपि तथ्यमिति प्राह ततोऽहं कुपितो भृशम् ॥५६॥ कण्डो मद्भवनाच्छीघ्रं गच्छ त्वं ब्राह्मणाधम ॥ इत्युक्ते सोऽपि साष्टाङ्गं प्रणिपत्याब्रवीच्च माम् ॥५७॥ दूर्वारसं नित्यमेव पिबामि पितृवाक्यतः ॥ इत्युक्तेऽपि कुलात्सोऽपि बहिष्कार्य इतीरितः ॥५८॥ एतस्मिन्नन्तरे काले वागुवाचाशरीरिणी ॥ निष्पापोऽयं सत्यतपाः शिष्यस्ते भृगुनन्दन ॥५९॥ पृथुग्रीवेण मात्सर्याद्रोमपादेन वै तथा ॥ अपवादं कूटसाक्ष्यमुक्तं च न विचारतः ॥६०॥ तस्मात्त्वमपि विप्रर्षे किञ्चिद्दुष्कृतवानभूः ॥ एतत्पापविशुद्ध्यर्थं गच्छ गोकर्णमद्य वै ॥६१॥ तत्राश्रमपदं कृत्वा तपः कुरु विधानतः ॥ महादेवप्रसादेन तव दोषो विनश्यति ॥६२॥ रोमपादस्य कण्डोश्च पृथुग्रीवस्य वै तथा ॥ इत्युक्त्वा मां नभोवाणी विरराम द्विजोत्तम ॥६३॥ ततः शिष्यैः समं गत्वा गोकर्णमहमादरात् ॥ तस्य क्षेत्रस्य सीमायां स्थित्वाहमचरं तपः ॥६४॥ आविर्बभूव पुरतो ह्यस्माकं परमेश्वरः ॥ स्तुतोऽथ बहुभिस्तोत्रैः स्वकपर्दाज्जहौ तदा ॥

६५॥ गङ्गां त्रैलोक्यजननीं नदी भूत्वा तु सागता ॥ समुद्रं प्राविशच्छीघ्रमथोवाच सदाशिवः ॥६६॥
एषा नदी पुण्यतमा शाल्मली नाम नामतः ॥ महापातकिनो ये च कूटसाक्षिषु संस्थिताः ॥६७॥
तेषां पुत्रा यदि स्नायुः पितॄनुद्दिश्य भक्तितः ॥ सर्वपापविनिर्मुक्ताः प्राप्नुयुः परमां गतिम् ॥६८॥
तस्माच्छाल्मकिनीत्येवं वदिष्यन्ति जना भुवि ॥ इत्युक्त्वा भगवाञ्छम्भुस्तत्रैवान्तरधीयत ॥६९॥
ततोऽहं शिष्यसहितः स्नात्वा नद्यां समाहितः ॥ गोकर्णेषु च तीर्थेषु स्नात्वापूज्य महाबलम् ॥७०॥
यथास्थानं गतोऽहं वै तस्मात्त्वं द्विजपुङ्गव ॥ स्नानं कृत्वा तु गङ्गायां स्नात्वार्चय महाबलम् ॥७१॥
एवमुक्त्वा सत्यतपा जह्नुं स्वैरगतिर्ययौ ॥ ततो जह्नुस्तु गोकर्णे शाल्मलीतीरमागमत् ॥७२॥ शाल्म
ल्यां स्नानमाधाय गङ्गामूर्तिमपूजयत् ॥ एवं पूजयतस्तस्य गङ्गा प्रत्यक्षतां गता ॥७३॥ वरं वरय भ
द्रं ते तुष्टास्मीत्याह तं नृप ॥ जन्हुरुवाच ॥ कृतो मयापराधस्ते गङ्गेऽज्ञानाच्च मोहतः ॥७४॥ तत्पा
पं शमयाद्य त्वं वरमेतं वृणोम्यहम् ॥ गङ्गोवाच ॥ जह्नो नास्ति त्वयि द्रोहो मत्प्रसादान्न संशयः
॥७५॥ आश्वयुज्यसिते पक्षे ह्यष्टम्यामरुणोदये ॥ नदीनदैः सर्वतीर्थैः सिद्धैः सुरगणैः सह ॥७६॥
आविर्भवाम्यत्र नद्यां सर्वपापहरा नृणाम् ॥ तस्माद्गङ्गावलीनाम्ना नदीख्याता भविष्यति ॥७७॥ त

स्मिन्कालेऽत्र यः स्नात्वा मन्मूर्तिं पूजयेन्मुने ॥ स्तोत्रेण त्वत्कृतेनैव मम नाम सहस्रकैः ॥७८॥ इह दत्वा सर्वभोगाँस्तस्मै दास्यामि मत्पदम् ॥ एवमुक्त्वा तदा गङ्गा तत्रैवान्तरधीयत ॥७९॥ एवं लब्ध्वा वरं जह्नुः कोटितीर्थोदके नृप ॥ स्नात्वा तत्रत्यतीर्थेषु स्वाश्रमं पुनराययौ ॥८०॥ सूत उवाच ॥ पुरा हिडिम्बभगिनी हिडिम्बा नाम राक्षसी ॥ गोकर्णे तप आधाय भर्तृद्रोहोद्भवादिकात् ॥८१॥ पापाद्विमुक्ता व्यासोक्त्या ह्याश्रमः स विमुक्तिदः ॥ सूत उवाच ॥ वाजिमेधशतं कृत्वा नहुषो नृपसत्तमः ॥८२॥ प्राप्य शक्रपदं राजा च्युतोऽगस्त्यावमानतः ॥ व्यालो भूत्वा ततो मुक्तो गोकर्णे तप आचरत् ॥८३॥ ततो रुद्रप्रसादेन पुनः स्वर्गमवाप्तवान् ॥ सूत उवाच ॥ अम्बरीषो नलो राजा निमिर्नाभाग एव च ॥८४॥ इक्ष्वाकुश्च ययातिश्च बाणोनाम महासुरः ॥ एते चान्ये च बहवस्तपसा सिद्धिमागताः ॥८५॥ इति श्रीस्कान्दे० श्रीगोकर्णमाहात्म्ये एकादशोऽध्यायः ॥११॥

सूत उवाच ॥ पुरा कैलासशिखरे समासीनो वृषध्वजः ॥ पृष्टः प्रोवाच पार्वत्यै स्कन्दाय च महेश्वरः ॥१॥ गोकर्णक्षेत्रमाहात्म्यं प्रमथास्तत्र शुश्रुवुः ॥ मणिभद्रस्ततः सिद्धो भूतनाथश्च भारत ॥२॥ नमस्कृत्य हरं प्रोचुस्तत्क्षेत्रस्य च दर्शनम् ॥ यात्रां कृत्वा विधानेन क्षिप्रं यास्याम तेऽन्तिकम् ॥

॥३॥ रुद्र उवाच ॥ शीघ्रं गच्छत गोकर्णं दृष्ट्वायात मदन्तिकम् ॥ शम्भुनैवमनुज्ञाता ययुर्गोकर्णम-
ञ्जसा ॥४॥ सर्वदेवात्मकं मत्वा गोकर्णं ते कुरूद्वह ॥ प्राच्यां तत्क्षेत्रसीमायां कृत्वाश्रमपदं शुभम् ॥
५॥ सिद्धस्तपश्चरन्नासीद्ध्यायन्विश्वेश्वरं प्रभुम् ॥ प्रसन्नस्तु हरः प्राह वरं ब्रूहीति तं नृप ॥६॥
सिद्ध उवाच ॥ स्थित्वा क्षेत्रे तव विभो त्वत्सेवां कर्तुमुत्सहे ॥ शङ्कर उवाच ॥ अत्रैव वस सिद्ध त्वं
रक्षन्प्राचीं दिशं सदा ॥७॥ सिद्धकुण्डमिति ख्यातमष्टसिद्धिप्रदं भवेत् ॥ इति दत्वा वरं तस्मै तस्मि-
ल्लिङ्गेऽवसत्ततः ॥८॥ मणिभद्रोऽप्यधः शीर्षःपादाभ्यां भूमिमस्पृशन् ॥ ऊर्ध्वपादो निरालम्बश्चचार
सुचिरं तपः ॥९॥ शतशृङ्गतटे रम्ये ध्यायञ्छिवपदाम्बुजम् ॥ ततो रुद्रोऽप्युवाचेदं वरं वरय काङ्क्षि-
तम् ॥१०॥ मणिभद्र उवाच ॥ अत्रैव वस्तुमिच्छामि क्षेत्रेऽस्मिंस्तव शङ्कर ॥ शङ्कर उवाच ॥ अत्रैव
वस भद्र त्वं प्रतीचीसीम्नि रक्षकः ॥११॥ इति दत्वा वरं तस्मै तत्रैवान्तर्दधे हरः ॥ भूतनाथस्तपस्त-
प्त्वा प्रत्यक्षीकृत्य शङ्करम् ॥१२॥ तस्मात्सिद्धिमनुप्राप्य तत्रोवास यथासुखम् ॥ गोकर्णं रक्षमाणास्ते
तत्र ह्यासन्गणान्विताः ॥१३॥ सूत उवाच ॥ ततो गोकर्णमाहात्म्यं श्रुत्वा देवी मुदान्विता ॥ अथो-
वाच स्वभर्तारं तत्क्षेत्रं दर्शय प्रभो ॥१४॥ तच्छ्रुत्वा वचनं देव्याः शङ्करः प्रमथैः सह ॥ वृषारूढः स च

ययौ गोकर्णं सिद्धसेवितम् ॥१५॥ दर्शयामास पार्वत्यै दृष्ट्वा सा विस्मयं ययौ ॥ पार्वत्युवाच ॥ व
स्तुमिच्छाम्यहं चात्र क्षेत्रेऽस्मिन् शङ्कराधुना ॥१६॥ इत्युक्ते प्रियया सार्धमुवास परमेश्वरः ॥ उमाव
नमितिख्यातमाश्रमः सोऽप्यभून्महान् ॥१७॥ तदाश्रमः पुण्यतमो गोकर्णे भरतर्षभ ॥ शिला तु
कुण्डिकाकारा समुद्रोपरि वर्तते ॥१८॥ दर्शनादेव तस्यास्तु सर्वपापं व्यपोहति ॥ पृथिव्यां यानि ती
र्थानि यानि स्वर्गे वसन्ति वै ॥१९॥ तानि सर्वाणि शुद्ध्यर्थं देव्यास्तत्र गतानि वै ॥ तेषां ह्रदाद
भूत्तीर्थमुमाह्रदमिति प्रभो ॥२०॥ उमामहेश्वरं नाम स्थापितं लिङ्गमुत्तमम् ॥ तत्तीर्थेषु नरः स्नात्वा
तल्लिङ्गं परिपूजयेत् ॥२१॥ सर्वान्कामानवाप्नोति सर्वपापैः प्रमुच्यते ॥ तस्मिन्वने कल्पतरुश्छा-
पादपनामकः ॥२२॥ सदा पुष्पफलोपेतः सप्तहस्तोच्छ्रितश्च सः ॥ मृत्युं जयन्ति तं प्राप्य जन्तवो
नात्र संशयः ॥२३॥ क्रीडागिरेरधो भागे मालिनी नाम निम्नगा ॥ अस्ते पुण्योदका राजन्नृणां पु
ण्यविवर्धिनी ॥२४॥ स्वायम्भुवेऽन्तरे चासीच्चन्द्रदेव इति श्रुतः ॥ मालिनी नाम तस्यासीद्भार्या परम
शोभना ॥२५॥ तया सार्धं नृपवरः सिद्धिमिच्छंस्तपोऽचरत् ॥ क्रीडाशैलादधोभागे हरमाराधयन्स्व
यम् ॥२६॥ ततः प्रसन्नो भगवानुमया सहितः शिवः ॥ शङ्कर उवाच ॥ तुष्टोऽस्मि तपसा तेऽद्य स

पत्नीकस्य पार्थिव ॥२७॥ वरं वरय भो राजन्नित्युक्ते शम्भुनाब्रवीत् ॥ चन्द्रदेव उवाच ॥ त्वयि सा-
युज्यमिच्छामि तद्देहि भगवन्मम ॥२८॥ मालिनी चापि पार्वत्यां वव्रे सायुज्यमञ्जसा ॥ तथास्त्विति
ति हरः प्रोचे देवीं तामपि पार्थिव ॥२९॥ वायुभूतौ विविशतुर्देवं देवीं कुरूद्वह ॥ चन्द्रदेवाश्रमो
नाम ख्यातो मुक्तिप्रदो नृणाम् ॥३०॥ ततः शिवः पार्वती च तत्र क्रीडां प्रचक्रतुः ॥ सुचिरं राज
शार्दूल यथाकामं यथासुखम् ॥३१॥ तयोः सम्भोगजनिता शुक्लीभूता महानदी ॥ शुद्धस्फटिकसङ्का
शा निर्मला पापहारिणी ॥३२॥ मालिनी नाम विख्याता नदी सर्वरसान्विता ॥ द्वादशे द्वादशे व
र्षे फाल्गुने मासि दृश्यते ॥३३॥ फाल्गुनर्क्षे कृतघ्नास्तां न पश्यन्ति कुरूद्वह ॥ तस्मिन्काले नरो य
स्तु तत्र स्नानं करोति च ॥३४॥ सोऽमरत्वमवाप्नोति सत्यं सत्यं मयोदितम् ॥ सूत उवाच ॥ पुरा
व्याधस्तु दुष्टात्मा सह्याद्रिशिखरे नृप ॥३५॥ दुर्मुखो नाम तत्रास्ते निर्घृणः पापचेतनः ॥ पशुप
क्षिद्विजान्हन्ति मांसगृध्नुर्दुरात्मवान् ॥३६॥ सकुटुम्बा हता विप्रा हता गावः सवत्सकाः ॥ तद्भी
त्या सर्वभूतानि तं देशं नोपचक्रमुः ॥३७॥ एवं कालो महान्राजन्नत्यगात्तस्य दुर्मतेः ॥ ततोऽभ्य
गात्कौशिकाख्यस्तीर्थसेवी द्विजोत्तमः ॥३८॥ गोकर्णस्थानि तीर्थानि स्नात्वापूर्य कमण्डलुम् ॥ सह्या

द्रिमगमत्सोऽपि तं दृष्ट्वाभ्यद्रवत्खलः ॥३९॥ गृहीत्वा चर्मखड्गे च तिष्ठ तिष्ठेतिचाब्रवीत् ॥ तमापत न्तमालोक्य कौशिको भयविह्वलः ॥४०॥ तस्योपरि विचिक्षेप भ्रामयित्वा कमण्डलुम् ॥ कमण्डलो स्तीर्थजलस्पर्शमात्रात्तदा नृप ॥४१॥ पापहानिरभूत्तस्य लुब्धकस्य दुरात्मनः ॥ दैववानभवत्सद्यस्त्य त्त्वा स्वाभाविकीं मतिम् ॥४२॥ निरस्य चर्म खड्गं च प्रतिजज्ञे तदा च सः ॥ अद्यप्रभृति भूतानां स्व स्त्यस्त्वभयदोऽस्म्यहम् ॥४३॥ मत्तस्तवभयं मास्तु नैवाश्नामि द्विजोत्तम ॥ इत्युक्त्वा लुब्धको राज-न्ननाम द्विजपादयोः ॥४४॥ उत्त्थाय प्राञ्जलिर्भूत्वा इदं वचनमब्रवीत् ॥ पापोऽहं पापकर्माहं मामुद्धर नमोऽस्तु ते ॥४५॥ इत्युक्तः कौशिकस्तं वै दृष्ट्वा भयमपास्य च ॥ उवाच मधुरं विप्रः किमिदं तव चेष्टितम् ॥४६॥ तच्छ्रुत्वा लुब्धकः प्राह प्रसादं कुरु भो मयि ॥ मया बहूनि पापानि कृतानि द्वि जपुङ्गव ॥४७॥ त्वां दृष्ट्वाहं हन्तुमगां भयात्त्वं क्षिप्तवानभूः ॥ मन्त्रपूतं जलं विप्र पापहानिरभूत्ततः ॥४८॥ तपश्चरितुमिच्छामि उपदेशं कुरु प्रभो ॥ इति तद्वचनं श्रुत्वा कौशिको ब्राह्मणोऽब्रवीत् ॥४९॥ यद्येवं निश्चितं वीर त्वयाद्य व्याधसत्तम ॥ व्रतं निरशनं कृत्वा गोकर्णं याहि साम्प्रतम् ॥५०॥ तत्रा श्रमपदं कृत्वा यज विश्वेश्वरं हरम् ॥ यावज्जीवं महाबाहो ह्यन्ते स्वर्गमवाप्स्यसि ॥५१॥ एवमुक्त्वा त

तो विप्रो यथाकामं जगाम ह ॥ व्याधस्त्यक्त्वा तु तत्सर्वं गोकर्णं प्रतिजग्मिवान् ॥५२॥ वृक्षमूलमु
पाश्रित्य निराहारोऽचरत्तपः ॥ शिवसंकीर्तनात्तस्य पापहानिरजायत ॥५३॥ ततः पञ्चत्वमापन्नो गो
कर्णे भरतर्षभ ॥ तेन पुण्येन महता व्याधः कैलासमाप्तवान् ॥५४॥ व्याधाश्रमः पुण्यतमः पवित्रः
पापनाशनः ॥ दिव्यं विमानमारुह्य दिव्यस्त्रीगणसेवितः ॥५५॥ व्याधः कैलासमगमत्किन्ततोऽधि
कमुच्यते ॥ स्वर्गमोक्षप्रदं राजन् गोकर्णं नात्र संशयः ॥५६॥ तदाश्रित्य पुरा सर्वे सिद्धाः सिद्धिमु
पागताः ॥ न तस्य महिमा शक्यो वक्तुं वर्षशतैरपि ॥५७॥ शिलां गृहीत्वा तत्रस्थां ये यजन्ति कुरू
द्वह ॥ ते रुद्रलोकं गच्छन्ति किमु लिङ्गार्चनान्नृप ॥५८॥ सूत उवाच ॥ संवर्तकोऽपि विप्रेन्द्रो ना
रदान्मुनिपुङ्गवात् ॥ श्रुत्वा गोकर्णमाहात्म्यं तीर्थे स्नात्वा स्वनिर्मिते ॥५९॥ तल्लिङ्गं पूजयित्वा तु नार
दात्सिद्धिमाप्तवान् ॥ तपस्तप्त्वा तु सुचिरं यथाकाममुवास ह ॥६०॥ सूत उवाच ॥ वैवस्वतमनोः
काले द्वापरे मुनिपुङ्गव ॥ मथुरायां द्विजवरो ह्यत्रिगोत्रसमुद्भवः ॥६१॥ अलिजङ्घ इति ख्यातो ह्या
सीद्देवविवर्जितः ॥ तस्यासीज्जारिणी भार्या सदा निष्ठुरभाषिणी ॥६२॥ नाम्ना चानङ्गलतिका पति
भक्तिविवर्जिता ॥ अलिजङ्घोऽपि दुर्मेधा नित्यं दुर्जनसङ्गतः ॥६३॥ पानासक्तो द्यूतकारी परस्त्रीगम